॥ श्रीः ॥

हरिदास-संस्कृत-ग्रन्थमाला

१७७

बनारसपरीक्षोपयोगि-

# सोत्तरा-प्रथमा-प्रश्नावली

प्रथमपरीक्षासमागतसकलप्रश्नपत्रसहिता

रचयिता—

पण्डित श्री रामचन्द्र झा व्याकरणाचार्य



चौखम्बा-संस्कृत-पुस्तकालय, बनारस-१

मूल्य

॥ श्रीः ॥

हरिदास-संस्कृत-ग्रन्थमाला
१७७

सोत्तरा-

# प्रथमा-प्रश्नावली

प्रथमपरीक्षासमागतसकलप्रश्नपत्रसहिता

## लघुकौमुदी-प्रश्नोत्तरी

रचयिता—

पण्डित श्री रामचन्द्र झा व्याकरणाचार्यः



चौखम्बा-संस्कृत-पुस्तकालय, बनारस-१

२००९ ] चतुर्थावृत्तिः [ ई० १९५२

# प्राक्कथन

प्रश्नावलीका यह अभिनव परिवर्तित चतुर्थ संस्करण परीक्षार्थी छात्रोंके लिये ही नहीं प्रत्युत अल्पवयस्क बालकोंके लिये भी अत्यधिक उपयोगी सिद्ध होगा। सन् १९२० से सन् १९५२ तककी परीक्षाओंमें आये हुये लघुकौमुदीके प्रश्नोंके उत्तर प्रकरणानुसार इस संस्करणमें लिखे गये हैं। अध्ययनके समयसे ही लघुकौमुदीके साथ ही साथ इस प्रश्नोत्तरीको पढ़ाया जाय तो विद्यार्थीका भविष्य बहुत ही समुज्ज्वल हो जायगा। किसी भी परीक्षामें उन्हें प्रश्नोत्तरी रटानेकी आवश्यकता ही नहीं होगी। प्रश्नके अतिरिक्त भी बहुतसे महत्वके विषय इस संस्करणमें यत्र तत्र दिये गये हैं, जिससे विद्यार्थीको अधिक लाभ होगा।

इस पुस्तकालयसे रघुवंश, हितोपदेश आदि प्रथम परीक्षा-निर्धारित सभी ग्रन्थोंकी टीका, टिप्पणी, कथासार आदि बहुत ही परीक्षोपयोगी सरल छपे हैं। अतएव साधारण प्रश्नपत्रोंके उत्तर इस संस्करणमें देकर व्यर्थमें पुस्तकका कलेवर बढ़ानेकी व्यवस्था नहीं की गयी है। परीक्षार्थियोंको चाहिये कि इस प्रश्नावलीके साथ ही साथ 'चौखम्बा सं० पुस्तकालय, बनारस' से प्रकाशित हितोपदेश, रघुवंशादिको अवश्य मंगाकर पढें। उनमें उन्हें सभी साधारण प्रश्नोंके अविकल उत्तर मिलेंगे। अनुवाद और संस्कृत निबन्धके लिये तो 'संस्कृत रचनानुवाद शिक्षक' तथा 'प्रबन्धपारिजात' सर्वोपरि है। सन् ५२ तक की परीक्षामें जितने प्रश्न पूछे गये हैं सभी उन पुस्तकों में गतार्थ हो चुके हैं। अतः अनुवाद और निबन्धके प्रश्नोत्तरके लिये उपर्युक्त पुस्तकोंको अवश्यमेव पढ़ना चाहिये।

इस प्रश्नावलीमें लघुकौमुदीके प्रश्नोत्तर लिखते समय प्रश्नके आगे ईस्वीकी संख्या लिखी गई है। संभव है संख्या लिखनेमें भूल-चुक होगई हो। आशा है पाठक इसको सुधार लेंगे। प्रश्नोत्तर लिखते समय मेरा विचार था कि सन् २० से सन्

५२ तकके सभी प्रश्नपत्र पुस्तकके अन्तमें दिये जांय, परन्तु वह पिष्टपेषण मात्र होता क्योंकि सन् २० से सन् ३९ तक के प्रश्नपत्रोंको मिलानेसे मालूम हुआ कि सभी प्रश्न सन् ४० से सन् ५२ के मध्यमें गतार्थ हो गये हैं। अत एव मैंने छात्रों की नाजुक आर्थिक स्थितिको देखकर पुस्तकका मूल्य अधिक न बढ़े इसलिये उन प्रश्न-पत्रोंको देकर पुस्तकका कलेवर बढ़ाना उचित नहीं समझा। आशा है इस त्रुटिके लिये विद्यार्थी खेद प्रकट नहीं करेंगे।

प्रकरणके अनुसार प्रश्नोत्तर लिखे गये हैं, अतः विद्यार्थीको प्रश्नके उत्तर मिलने में कठिनता नहीं होगी। विद्यार्थीको चाहिये कि वे पहले प्रश्नपत्रोंको देखें, तदुपरान्त उस प्रश्नका उत्तर प्रकरणके यथा स्थान पर देखें। ऐसा करनेपर प्रश्नका उत्तर अविलम्ब ही यथा स्थानपर मिल जायगा। कुछ ऐसे भी प्रश्न विद्यार्थीको मिलेंगे जिनके उत्तर अति लघु समझकर नहीं लिखे गये हैं। सन्धि विषयक विशेष जानकारीके लिये मेरा सम्पादित **'सन्धिचन्द्रिका'** को विद्यार्थी अवश्य पढ़ें। उसमें सन्धिप्रकरणके अतिरिक्त कारक, समास आदिका भी ज्ञान संक्षेपमें कराया गया है, जो परीक्षामें बराबर पूछे जाते हैं।

## आत्मनिवेदन—

अन्तमें मैं अध्यापकोंसे निवेदन करता हूँ कि आप विद्यार्थीको प्रश्नोत्तरी रटनेका आदेश न दें प्रत्युत अध्ययन करनेके लिये कहें। तभी यह मेरा श्रम सफल होगा। मैंने बहुधा लघुकौमुदीके गूढ़ाशयोंको अपने लेखमें व्यक्त किया है जो परीक्षा का विषय नहीं है, वस्तुतः समझनेका विषय है। मैं अपनी प्रश्नावली पर गर्व नहीं करता पर इतना अवश्य कहूंगा कि अन्यत्रसे प्रकाशित प्रश्नोत्तरीके साथ साथ एकबार इसका समन्वय आप अवश्य करें—इत्यलमधिकेन।

गुरुपूर्णिमा
सं०२००६

विदुषां वशंवदः—
**श्री रामचन्द्र झा**

|| श्रीः ||

# लघुकौमुदीसोत्तरा-
# प्रथमा-प्रश्नावली

ओङ्कारं मुरलीधरं प्रभुवरं वृन्दावनाधीश्वरम्
भक्ताऽभीष्टफलप्रदं सुरवरै-रासेव्यपादाम्बुजम् ।
वन्दे रासविहारिणं निजजनानन्दप्रदं माधवम्
श्रीराधादिसमस्तगोपवनितासंसेव्यमानं प्रभुम् ॥

## अथ संज्ञाप्रकरणम् ।

**'लण्' सूत्रेऽकारश्च ( १९४० )**—'लण्' सूत्रे तकारोत्तरवर्तिनोऽकारस्येत्संज्ञकत्वादेव 'र' प्रत्याहारस्य सिद्धिर्भवति । अत एव 'तवल्कारः' इत्यत्र 'उरण् रपरः' इत्यनेन लपरत्वं सिद्धम् ।

**आदिरन्त्येन सहेता ( १९-४८,५१ )**—'आदिः-अन्त्येन-सह-इता' इति सूत्रविभागः । अत्र सूत्रे आद्यन्तशब्दाभ्यां मध्यगा आक्षिप्यन्ते, 'स्वं रूपम्' इति पूर्वसूत्रात् 'स्वम्' इत्यनुवर्तते । ततश्च 'अन्त्येन इता सह उच्चार्यमाणः आदिः ( अण् अच्, इत्यादिरूपः ) मध्यगानां स्वस्य च प्रत्याहारसंज्ञेति सूत्रार्थो लभ्यते । उदाहरणं यथा—'अ इ उ ण्' इति सूत्रघटकः 'अण्' इति । अत्र अन्त्येत्संज्ञकवर्णः 'ण्' इति, तेन सह उच्चार्यमाणः आदिवर्णः 'अण्' इति, स च ( अण् ) मध्यगानाम् ( इ, उ, इत्यनयोः ) स्वस्य ( 'अ' इत्यस्य ) च संज्ञको भवति । एवमन्यत्राप्यूह्यम् ।

---

**नोटः**—जो जो प्रश्न जिन जिन वर्षोंमें आये हैं उन उन वर्षों ( ईस्वियों ) का उल्लेख प्रश्नके आगे कोष्ठकमें कर दिये गये हैं । प्रश्नोंका अविकल स्वरूप पुस्तक के अन्त में छपे प्रश्न-पत्रों में देखिये ।

भाषार्थ—अन्त्य इत्संज्ञक वर्णके साथ उच्चरित आदि वर्ण अपने तथा मध्यवर्ती वर्णोंके भी संज्ञक हो। जैसे—'अ इ उ ण्' सूत्रघटक 'अण्' प्रत्याहारमें अन्त्य इत्संज्ञक 'ण्' के सहित उच्चारित आदि वर्ण हुआ 'अ–ण्' वह 'अण्' अपने बीच के 'इ उ' का तथा अपना अर्थात् 'अ' का भी संज्ञक हुआ।

**'ऊकालोऽज्ह्रस्वदीर्घप्लुतः' इति सूत्रेऽज्ग्रहणस्य किं फलम्?** (१९४८)—अयम्भावः हलामर्धमात्रिकत्वेन वां काल इव कालाऽभाद् व्यावर्त्याऽभावेन प्रकृतसूत्रे अज्ग्रहणस्य किं फलमिति चेन्न, अज्ग्रहणाऽभावे 'प्रतक्ष्य' 'प्ररक्ष्य' इत्यादौ 'क्–ष्' इति द्वाभ्यां मिलितस्य 'क्ष्' इत्यस्यैकमात्रिकत्वेन 'ऊकाले'ति सूत्रेण तस्य ह्रस्वसंज्ञायां 'ह्रस्वस्य पिति कृति तुक्' इति तुगागमापत्तेः।

**उदात्तस्वरितलक्षणे** (१९४५)—उदात्तलक्षणम्—'उच्चैरुदात्तः' इति। 'ताल्वादिसभागस्थानोच्चैःस्वरोच्चार्यमाणविषयत्वमुदात्तत्वमिति।

स्वरितलक्षणम्—'समाहारः स्वरितः' इति। उदात्तत्वानुदात्तत्वोभयधर्मविशिष्टवर्णविषयत्वं स्वरितत्वमिति। अत्राऽनुदात्तलक्षणं 'नीचैरनुदात्तः' इति। इह 'नीचैः' शब्दोऽधिकरणशक्तिप्रधानः अधोभागे इत्यर्थे वर्तते। एवमुदात्तलक्षणेऽपि अधिकरणशक्तिप्रधानः 'उच्चैः' शब्दः ऊर्ध्वभागे इत्यर्थे वर्तत इत्यवसेयम्।

**अचां कति भेदाः?** (१९—३९,५१)—अचां मध्ये 'अ इ उ ऋ' एषां प्रत्येकमष्टादशभेदाः। 'लृवर्णस्य द्वादश तस्य दीर्घाऽभावात्' इति राद्धान्तेन लृवर्णस्य तु द्वादशैव भेदाः, तत्र 'ऋलृवर्णयोर्मिथः सावर्ण्यतया ऋकारेण स्वाष्टादशभेदानां लृकारीयद्वादशभेदानां च ग्रहणाल्लृवर्णस्य त्रिंशद् भेदाः। एवम् ऋवर्णोऽपीति ध्येयम्। अथैवमेचामपि ह्रस्वाऽभावाद् द्वादशैव भेदाः।

तद्भेदग्राहकं सूत्रं यथा—१. 'ऊकालोऽज्ह्रस्वदीर्घप्लुतः' २. उच्चैरुदात्तः' ३. 'नीचैरनुदात्तः' ४. 'समाहारः स्वरितः' ५. 'मुखनासिकावचनोऽनुनासिकश्चे' ति। अत्र स्वराणामष्टादशभेदोदाहरणं ग्रन्थादौ' चक्रे द्रष्टव्यम्।

**सवर्णसंज्ञाविधायकं** (१९-४२,४६,४७,४९,५२)—सवर्णसंज्ञाविधायकसूत्रं 'तुल्यास्यप्रयत्नं सवर्णम्' इति। "ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यादि"ति वृत्तिः। आस्ये (मुखे) भवमास्यम् (ताल्वादिस्थानम्), प्रकृष्टो यत्नः प्रयत्नः। आस्यं च प्रयत्नश्च आस्यप्रयत्नौ। तुल्यौ आस्यप्रयत्नौ यस्य (वर्णजालस्य), तत्तुल्यास्यप्रयत्नं परस्परं सवर्णसंज्ञकं स्यादित्यर्थः।

अ, ज, उ, व, एषां वर्णानां स्थानानि ( १९४७ )—अकारस्य कण्ठस्थानम् ( अकुहविसर्जनीयानां कण्ठः )। जकारस्य तालुस्थानम् ( इचुजशानां तालु )। उकारस्य ओष्ठस्थानम् ( उपूपध्मानीयानामोष्ठौ )। वकारस्य दन्तस्थानम्, ओष्ठस्थानं च ( वकारस्य दन्तौष्ठम् )।

प्रयत्नाः कति ? के च ते ? ह, प, य, वर्णानां के आभ्यन्तरप्रयत्नाः ? ( १९-४७,५२ )—प्रयत्नो द्विधा आभ्यन्तरो बाह्यश्च। तत्राद्यः 'स्पृष्ट-ईषत्स्पृष्ट-इषद्विवृत-विवृत-संवृतभेदात् पञ्चधा। द्वितीयो बाह्यप्रयत्नस्तु-'विवार-श्वास-नाद-अघोष-घोष-अल्पप्राण-महाप्राण-उदात्त-अनुदात्त-स्वरितभेदाद् एकादशेत्युभयोर्मिलित्वा प्रयत्नाः षोडश इति तत्त्वविदः। तत्राभ्यन्तरप्रयत्ने हकारस्य ईषद्विवृतप्रयत्नः ( ईषद्विवृतमूष्मणाम्-'शषसहा ऊष्माणः' इति वचनात् )। एवं पकारस्य स्पृष्टप्रयत्नः (स्पृष्टप्रयतनं स्पर्शानाम्-'कादयो मावसानाः स्पर्शाः' इति वचनात्)। तथैव यकारस्य ईषत्स्पृष्टप्रयत्नः ( ईषत्स्पृष्टमन्तस्थानाम् 'यणोऽन्तस्था' इति निर्देशात् )।

त-ट, ख-ह, च प, वर्णानां कानि स्थानप्रयत्नानि। ( १९-४८, ४९, ५०, ५१ )—तकारस्य दन्तस्थानम् ( लृतुलशानां दन्ताः इति निर्देशात् ) टकारस्य तु मूर्धास्थानम् ( ऋटुरषाणां मूर्धा इति वचनात् ) अनयोर्बाह्यप्रयत्ने—विवार-श्वास-अघोष-प्रयत्नाः, अल्पप्राणप्रयत्नाश्च विद्यन्ते ( 'खरो विवाराः श्वासा अघोषाश्च' 'वर्गाणां प्रथम-तृतीय-पञ्चमा यणश्चाल्पप्राणाः' इति वचनात् )। आभ्यन्तरप्रयत्नतूभयोः स्पृष्टप्रयत्न एवेति ( 'स्पृष्टप्रयतनं स्पर्शानाम्-'कादयो मावसानाः स्पर्शाः' इति राद्धान्तात् )।

खकारस्य हकारस्य च कण्ठस्थानम् ( अकुहविसर्जनीयानां कण्ठः इत्युक्तत्वात् ) बाह्यप्रयत्ने त्वनयोर्मध्ये खकारस्य विवार-श्वास-अघोषप्रयत्नाः महाप्राणप्रयत्नाश्चेति ( 'खरो विवाराः श्वासा अघोषाश्च' 'वर्गाणां द्वितीय-चतुर्थौ शलश्च महाप्राणाः' इति निर्देशात् ) हकारस्य तु संवार-नाद-घोषप्रयत्नाः महाप्राणप्रयत्नाश्चेति ( हशः संवारानादाघोषाश्च' वर्गाणां········शलश्च महाप्राणाः' इत्युक्तत्वात् )। आभ्यन्तरप्रयत्ने तु खकारस्य स्पृष्टप्रयत्नः हकारस्य तु ईषद्विवृतप्रयत्नः ( स्पृष्ट······स्पर्शानाम्—'कादयो······स्पर्शाः' 'ईषद्विवृतमूष्मणाम् 'शषसहा ऊष्माणः' इत्युक्तत्वात् )

चकारस्य तालुस्थानम्, पकारस्य तु ओष्ठस्थानम्, ( 'इचुजशानां तालु' 'उपूपध्मानीयानामौष्ठौ' इत्युक्तत्वात् )। उभयोः बाह्यप्रयत्ने तु विवार-श्वास-अघोषप्रयत्नाः

अल्पप्राणप्रयत्नाश्चेति ( 'खरो·········अघोषाश्च' 'वर्गाणां प्रथम···अल्पप्राणाः' इति निर्देशात् )। एवमाभ्यन्तरप्रयत्नेऽप्युभयोः स्पृष्टप्रयत्न एवेति ( स्पृष्ट······ स्पर्शाः ) इत्युक्तत्वात् )।

**अ-इ, क-ख, च-छ-ट, ग-ड-म-ध, श, ह, वर्णानां बाह्यप्रयत्नाः** ( १९-३९, ४१, ४३, ४६, ४९ )—एषां प्रश्नोत्तरलेखनप्रकारस्तूपर्युक्तवद्बोध्यः। उत्तराणि तु ग्रन्थादौ चक्रे द्रष्टव्यानि।

**अणुदित्सवर्णस्य चाप्रत्ययः** ( १९४६ )—जो विधान किया जाय वह प्रत्यय और तद्भिन्न अप्रत्यय कहलाता है। एवं च सूत्रार्थ यह हुआ कि 'जिसका विधान किया गया हो ऐसा 'अण्' ( प्रत्याहार ) और उदित् ( कु चु टु तु पु ) अपने सवर्ण के बोधक हों। फल यह हुआ कि 'अस्य च्वौ' सूत्र में ह्रस्व अकार से दीर्घ आकार का भी ग्रहण हुआ और उससे 'गाङ्गी भवति' में गङ्गा के आकार का ईत्वविधान सफल हो सका।

**'तुल्यास्यप्रयत्नं सवर्णम्' अणुदित्सवर्णस्ये'ति च सूत्रं किं किं कार्यं कुरुते** (१९-४६,५२)-अणुदित्सूत्रेण अणमुद्दिश्य सवर्णग्राहकता विधीयते। तुल्यास्यप्रयत्नं सवर्णम्' इति वदस्य सवर्णसंज्ञाविधायकत्वं तु न समानाधिकरणपदोपादानाऽभावात्।

**अत्रैवाण् परेण णकारेण**—भाव यह है कि 'अ इ उ ण्' और 'ल ण्' इन दोनों सूत्रोंमें णकारानुबन्ध का पाठ है, अतः 'अण्' प्रत्याहारके विषयमें सन्देह हो सकता है कि यह किस णकारसे ग्रहण किया जाय। इसीकी निवृत्तिके लिये मूल ग्रन्थमें 'अत्रैवाण् परेण णकारेण' ऐसा कहा गया है। भाष्यकारका व्याख्यान है कि अत्रैव अर्थात् केवल इसी 'अणुदित्' सूत्र में ही 'अण्' प्रत्याहारका पर णकारसे ग्रहण होता है-अन्यत्र नहीं। अत एव 'ऋत उत्' सूत्रमें ऋकारका तपरकरण चरितार्थ हुआ।

**संहितासंज्ञाविधायकसूत्रम्** ( १९-४२, ४५ )—संहितासंज्ञाविधायकसूत्रं 'परः सन्निकर्षः संहिता' इति। वर्णोंकी अत्यन्त सन्निधिकी संहिता संज्ञा हो। संहितालक्षण यथा—'स्वभावसिद्धार्थमात्रातिरिक्तकालव्यवायेन शून्यत्वं संहितात्वम्'।

इति सोत्तरायां प्रश्नावल्यां संज्ञाप्रकरणम्

---

# अथ अच्सन्धिप्रकरणम्

'**अलोन्त्यस्य**' ( १९४७ )—षष्ठीनिर्देशेन विधीयमान जो कार्य वह अन्त्य 'अल्' के स्थान में हो। अर्थात् षष्ठ्यन्त का निर्देश करके जहां ( जिस उदाहरण में ) आदेशका विधान किया जाय वहां अन्त्य वर्णके स्थानमें आदेश हो।

**वृद्धि** ( १९५२ )—वृद्धिसंज्ञाविधायकसूत्रं 'वृद्धिरादैच्' इति। आदैच्च वृद्धिसंज्ञः स्यादित्यर्थः।

**सुध्युपास्यः** (१९३७)–'सुधी × उपास्यः' इति स्थिते 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति 'स्थानेन्तरतमः' इति च परिभाषाद्वयसहकारेण ईकारस्य यणि यकारे कृते 'अनचि च' इत्यनेन धकारस्य द्वित्वे 'सु ध् ध् य् उपास्यः' इति जाते '**झलां जश् झशि**' इत्यनेन पूर्वधकारस्य दकारे सति 'संयोगान्तस्य लोपः' इत्यनेन यलोपे प्राप्ते 'यणः प्रतिषेधो वाच्यः' इति वार्तिकेन निषेधे 'सुद्ध्युपास्यः' इति। द्वित्वाभावपक्षे 'सुध्युपास्यः' इति च रूपं बोध्यम्।

'**वान्तो यि प्रत्यये**' ( १९४९, ५० )—'यकारादौ प्रत्यये परे ओदौतोरवावौ स्तः' इति सूत्रार्थः। अत्र सूत्रे 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति परिभाषया तदादि-लाभेन यकारादौ इत्यर्थलाभः। उदाहरणं तु 'गव्यम्' 'नाव्यम्' इति।

**गव्यम्** (१९५२)–गोशब्दात् 'गोपयसोर्यत्' इति विकारार्थे यत्प्रत्यये कृते 'गो यम्' इति स्थिते 'वान्तो यि प्रत्यये' इति ओकारस्य अवादेशे 'गव्यम्' इति।

**गव्यूतिः** ( १९–२७, ३८, ४३, ४८ )—'गव्यूतिः स्त्री क्रोशयुगम्' इत्यमरः। 'गो यूतिः' इति स्थिते 'अध्वपरिमाणे च' इति वार्तिकेन यूतिशब्दे परे मार्गपरिमाणेऽर्थे गम्यमानस्य गोशब्दस्य ओकारस्य स्थाने अवादेशे 'गव्यूतिः' इति सिद्धम्।

**तपरस्तत्कालस्य** ( १९२० )—तकार रहे परमें जिसके अथवा तकारसे परमें जो रहे वह अपने समकालकी संज्ञाबोधक हो। सूत्रमें 'तपरः' से 'तः परो यस्मात् तपरः' और 'तात् परः तपरः' ये दो अर्थ निकलते हैं। दोनों का उदाहरण '**अदेङ्गुणः**' सूत्र में 'अत्–एङ्' है। यहाँ अकारसे पर तकार है अतः ह्रस्व 'अ' की तथा तकारसे पर 'एङ्' है अतः 'एङ्' से 'ए–ओ' मात्र की गुण संज्ञा होती है।

**उपेन्द्रः** (१९५०)—'उप इन्द्रः' इतिस्थिते 'आद्गुणः, इति गुणे 'उपेन्द्रः' इति।

**कृष्णर्द्धिः** ( १९-२४, ३६, ४०, ४७, ५२ )—'कृष्ण ऋद्धिः' इत्यवस्थायाम् 'ऋकारस्य गुणवृद्धी अरारावेवे'ति भाष्योक्त्या 'आद्गुणः' इत्यनेन अकारऋकारयोः स्थाने गुणे अकारे कृते 'उरण् रपरः' इत्यनेन रपरत्वे 'कृष्णर्द्धिः' इति सिद्धम् ।

**हर इह** ( १९-२२, २९, ३२, ३३, ४१ )—'हरे इह' इत्यवस्थायाम् 'एचोऽयवायावः' इत्यनेन एकारस्य अयादेशे 'लोपः शाकल्यस्य' इति सूत्रेण विभाषया यलोपे 'हर इह' इति स्थिते 'आद्गुणः' इत्यनेन गुणे प्राप्ते 'पूर्वत्राऽसिद्धम्' इत्यनेन यलोपस्याऽसिद्धत्वाद् गुणाभावे 'हर इह' इति। यलोपाभावे 'हरयिह' इति च।

**विष्ण इह** ( १९४० )—'विष्णो इह' इति स्थिते 'एचोऽयवायावः' इत्यनेन ओकारस्य अवादेशे 'लोपः शाकल्यस्य' इत्यनेन विभाषया वलोपे कृते 'विष्ण इह' इति स्थिते 'आद्गुणः' इत्यनेन गुणे प्राप्ते 'पूर्वत्राऽसिद्धम्' इत्यनेन वलोपस्याऽसिद्धत्वाद्गुणाभावे 'विष्ण इह' इति । वलोपाभावे 'विष्णविह' इति ।

**कृष्णैकत्वम्** (१९२८)—'कृष्ण एकत्वम्' इति स्थिते 'वृद्धिरेचि' इति सूत्रेण वृद्धौ 'कृष्णैकत्वम्' इति सिद्धम् ।

**देवैश्वर्यम्** ( १९५१ )—'देव ऐश्वर्यम्' इत्यवस्थायां 'वृद्धिरेचि' इत्यनेन वृद्धौ 'दवैश्वर्यम्' इति सिद्धम् ।

**प्रष्ठौहः** ( १९-३४, ४२ )—'प्रष्ठ ऊहः' इत्यवस्थायाम् 'एत्येधत्यूठ्सु' इत्यनेन वृद्धौ 'प्रष्ठौहः' इति सिद्धम् ।

**सुखार्तः**—सुखेन ऋतः 'सुखार्तः'। 'सुख ऋतः' इत्यवस्थायाम् 'आद्गुणः' इत्यनेन गुणे प्राप्ते तं बाधित्वा 'ऋते च तृतीयासमासे' इति वार्तिकेन वृद्धौ 'उरण् रपरः' इत्यनेन रपरत्वे 'सुखार्तः' इति सिद्धम् ।

**प्रार्णम्** ( १९३८ )—'प्र ऋणम्' इत्यवस्थायाम् 'आद्गुणः' इति गुणे प्राप्ते तं प्रबाध्य 'प्रवत्सतरकम्बलवसनार्णदशानामृणे' इति वार्तिकेन वृद्धौ 'उरण् रपरः' इत्यनेन तस्य रपरत्वे 'प्रार्णम्' इति सिद्धम् ।

**'भूवादयो धातवः'**(१९५१)—भूश्च वाश्च भूवौ। आदिश्च 'आदिश्च' आदी। भूवौ आदी येषान्ते 'भूवादयः' इत्येकं पदम् , 'धातवः' इत्यपरम् । क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः' इति सूत्रार्थः । उदाहरणं तु 'प्रार्च्छति' इति। अत्र 'ऋच्छति' इत्यस्यानेन धातुसंज्ञात्वेन 'उपसर्गादृति धातौ' इत्यनेन वृद्धिर्भवति ।

प्राच्छेति ( १९-४१, ४८ )—'प्र ऋच्छति' इत्यवस्थायाम् 'उपसर्गाः क्रियायोगे' इत्यनेन 'प्र' इत्यस्योपसर्गसंज्ञायाम् 'भूवादयो धातवः' इत्यनेन 'ऋच्छति' इत्यस्य धातुसंज्ञायां च सत्यां 'उपसर्गादृति धातौ' इत्यनेन पूर्वपरयोः स्थाने वृद्धौ 'उरण् रपरः' इत्यनेन रपरत्वे च कृते 'प्राच्छेति' इति सिद्धम् ।

प्रेजते ( १९५१ )—'प्र एजते' इति स्थिते 'उपसर्गाः क्रियायोगे' इत्यनेन 'प्र' इत्यस्योपसर्गसंज्ञायाम् 'एङि पररूपम्' इति पूर्वपरयोः स्थाने पररूपैकादेशे 'प्रेजते' इति।

शकन्धुः ( १९४२ )—'शक अन्धुः' इत्यवस्थायाम् 'अकः सवर्णे दीर्घः' इत्यनेन दीर्घे प्राप्ते तं प्रबाध्य 'शकन्ध्वादिषु पररूपं वाच्यम्' इति वार्तिकेन पररूपे कृते उक्तं रूपं सिद्धम्। अत्र तच्च पररूपं टेः=टिसंज्ञकस्य, भवति। टिसंज्ञा च 'अचोऽन्त्यादि टि' इत्यनेन ककारोत्तरवर्ति-अकारस्य भवतीति बोध्यम् ।

मार्त्तण्डः ( १९२१ )—'मार्त्त अण्डः' इति दशायाम् 'अकः सवर्णे दीर्घः' इति प्राप्तदीर्घं प्रबाध्य 'शकन्ध्वादिषु पररूपं वाच्यम्' इति वार्तिकेन 'अचोन्यादि टि' इत्यनेन विहितटिसंज्ञकस्य पररूपे 'मार्त्तण्डः' इति ।

शिवेहि (१९-२४, ३०, ३२, ३५, ३९, ४३, ४५, ४९)—'शिव आ इहि' इत्यवस्थायां धातूपसर्गयोः कार्यमन्तरङ्गम्' इत्यन्तरङ्गत्वात् सवर्णदीर्घस्याऽसिद्धत्वेन पूर्वम् 'आ इह' इत्यत्र 'आद्गुणः' इत्यनेन गुणे 'शिव एहि' इति स्थिते 'अन्तादिवच्च' इत्यनेन अन्तवद्भावमादाय 'ओमाङोश्च' इत्यनेन पररूपे 'शिवेहि' इति सिद्धम् ।

'अन्तादिवच्च' ( १९३९ )—'योऽयमेकादेशः स पूर्वस्यान्तवत् परस्याऽऽदिवत्' इति सूत्रार्थः । उदाहरणं तु 'शिवेहि' इति । अत्र एकादेशो गुणस्तस्य पूर्वान्तवद्भावेन आङ्त्वं मत्वा 'ओमाङोश्च' इत्यनेन पररूपं सिद्धं भवति।

श्रीशः ( १६२५ )—'श्री ईशः' इत्यवस्थायाम् 'अकः सवर्णे दीर्घः' इत्यनेन सवर्णदीर्घे 'श्रीशः' इति सिद्धम् ।

हरेऽव (१९५२)—'हरे अव' इति स्थिते 'एङः पदान्तादति' इति पूर्वरूपे 'हरेऽव' इति जातम् ।

गवाग्रम् , गो अग्रम् , गोऽग्रम् ( १६-२१, २८, ३३, ३४, ३७, ३६, ४१, ४३, ४५, ४७, ५० )—'गो अग्रम्' 'इत्यवस्थायाम् 'एचोऽयवायावः' इत्यनेन अवादेशः प्राप्तः तं प्रबाध्य 'सर्वत्रविभाषा गोः' इत्यनेन प्रकृतिभावः प्राप्तः तमपि परत्वात् प्रबाध्य 'अवङ् स्फोटायनस्य' इति सूत्रेण अग्रमित्येतद्घटकाऽकारे परे पदान्ते

विद्यमानस्य एङन्तस्य 'गो' इत्यस्य अवङादेशः प्राप्तः, स च अवङादेशः कुत्र स्यादिति प्रश्ने अवङः अनेकाल्त्वात् 'अनेकाल्शित् सर्वस्य' इत्यनेन सर्वादेशे प्राप्ते 'ङिच्च' इत्यनेन ङिदादेशस्य अनेकाल्त्वेऽपि अन्त्यादेश इति गोशब्दे गकारोत्तरवर्तिनः ओकारस्य अवङादेशे ङकारस्येत्संज्ञायां लोपे च कृते 'गव अग्रम्' इति जाते 'अकः सवर्णे दीर्घः' इत्यनेन सवर्णदीर्घे 'गवाग्रम्' इति । अवङादेशाभावपक्षे 'सर्वत्र विभाषा गोः' इत्यनेन प्रकृतिभावे 'गो अग्रम्' इति । प्रकृतिभावाभावपक्षे 'एङः पदान्तादति' इत्यनेन पररूपे 'गोऽग्रम्' इति च सिद्धम् ।

**गवेन्द्रः** (१६२३)—'गो इन्द्रः' इत्यवस्थायाम् 'इन्द्रे च' इत्यनेन अवङादेशे अनुबन्धलोपे 'आद्गुणः' इत्यनेन गुणे 'गवेन्द्रः' इति सिद्धम् ।

**एहि कृष्ण३ अत्र गौश्चरति** (१६४५)—अत्र वाक्ये 'कृष्ण अत्र' इति स्थिते सवर्णदीर्घं प्रबाध्य 'दूराद्धूते च' इत्यनेन टिसंज्ञकस्य णकारोत्तरवर्त्यकारस्य प्लुतसंज्ञायां 'प्लुतप्रगृह्या अचि नित्यम्' इत्यनेन प्रकृतिभावे रूपं सिद्धम् ।

**पचेते इमौ** (१६३२)—'पचेते इमौ' इत्यवस्थायाम् अयादेशं प्रबाध्य 'ईदूदेद्द्विवचनं प्रगृह्यम्' इत्यनेन प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि नित्यम्' इत्यनेन प्रकृति भावे उक्तं रूपं सिद्धम् ।

**कवी इमौ** (१६३४)—'कवी इमौ' इति दशायां यणादेशं प्रबाध्य 'ईदूदेद्द्विवचनं प्रगृह्यम्' इत्यनेन प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि नित्यम्' इत्यनेन प्रकृतिभावे 'कवी इमौ, इति सिद्धम् ।

**अमी ईशाः** (१६३४)—'अमी ईशाः' इति दशायां सवर्णदीर्घं प्रबाध्य 'अदसो मात्' इति सूत्रेण अदश्शब्दसम्बन्धिमकारात्परस्य ईकारस्य प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि नित्यम्' इत्यनेन प्रकृतिभावे 'अमी ईशाः' इति सिद्धम् ।

**अमुकेऽत्र** (१६३६)—'अमुके अत्र' इति दशायाम् अयादेशं प्रबाध्य 'एङः पदान्तादति' इत्यनेन पूर्वरूपे 'अमुकेऽत्र' इति सिद्धम् ।

'अदसो मात्' । इति सूत्रस्य प्रत्युदाहरणमेतत् । तत्र हि 'मात्' ग्रहणाऽभावे 'अदस्'शब्दात् 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इत्यनेन अकचि अनुबन्धलोपे 'अदकस्' इति, तस्माज्जसि अत्वे पररूपे जशः श्यादेशे 'आद्गुणः' इत्यनेन गुणे उत्वे मत्वे च कृते 'अमुके' इति सिद्धस्य 'अत्र' शब्देन योगे एकारस्य प्रगृह्यत्वं स्यात् । ननु 'अदसो मात्' इति सूत्रेण ईदूतोरेव प्रगृह्यत्वविधानाभ्युपगमेन

अकृतेऽपि माद्ग्रहणे नोक्तदोषः इति चेन्न, एकसमासोपात्तानामीदूदेतां मध्ये ईदूतोर्द्वयोरनुवृत्तौ एतोप्यनुवृत्तिप्रसक्तौ माद्ग्रहणादेतोऽनुवृत्तिः प्रतिबद्धा, माद्ग्रहणाऽभावे तु बाधकाऽभावादेतोऽप्यनुवृत्तिः स्यादिति दिक्।

**'निपात एकाजनाङ्'** (१६२०)—'आङ्' वर्जित एकाच् निपात की प्रगृह्य-संज्ञा हो, अर्थात् 'आङ्' रहित एक स्वरमात्र की सन्धि नहीं हो। ईषत् (अत्यल्प) अर्थ में, क्रिया के योग में, मर्यादा (सीमा) और अभिविधि (मर्यादा का प्रभेद व्याप्ति) अर्थ में जो 'आ' उसे 'ङित् (आङ्घटक-आ) और वाक्य तथा स्मरण अर्थ में जो 'आ' उसे अङित (केवल-आ) जानना चाहिये। कहा भी है—'ईषदर्थे क्रियायोगे मर्यादाऽभिविधौ च यः। एतमातं ङितं विद्याद् वाक्यस्मरणयोरङित्' इति। प्रकृत सूत्रका उदाहरण 'इ इन्द्रः' 'उ उमेशः' इत्यादि है।

**उ उमेशः** (१६३६)—'उ उमेशः' इत्यवस्थायां पूर्वस्य उकारस्य 'चादयोऽसत्त्वे' इत्यनेन निपातसंज्ञायां 'निपात एकाजनाङ्' इति प्रगृह्यसंज्ञायां प्लुतप्रगृह्या अचि नित्यम्' इति प्रकृतिभावे 'उ उमेशः' इति सिद्धम्।

**ओष्णम्** (१६४५)—'आ उष्णम्' इति दशायाम् ईषदर्थकस्य 'आ' इत्यस्य ङित्वात् 'निपात एकाजनाङ्' इत्यनेन प्रगृह्यसंज्ञाऽभावे प्रकृतिभावाऽभावेन 'आद्गुणः' इति गुणे 'ओष्णम्' इति सिद्धम्।

**'अहो ईशाः'** (१९३७)—'अहो ईशाः' इति दशायाम् 'एचोऽयवायावः' इति सूत्रेण अवादेशे प्राप्ते तं प्रबाध्य 'ओत्' इति सूत्रेण प्रगृह्यसंज्ञायां 'प्लुत प्रगृह्या अचि नित्यम्, इत्यनेन प्रकृतिभावे उक्तं रूपं सिद्धम्।

**विष्णो इति** (१९-२४, २६, ३१, ३८, ४६, ४९)—'विष्णो इति' इत्यवस्थायाम् एचोऽयवायावः' इत्यनेन अवादेशे प्राप्ते तम्प्रबाध्य 'सम्बुद्धौ शाकल्यस्येतावनार्षे' इत्यनेन विभाषया प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि नित्यम्' इत्यनेन प्रकृतिभावे 'विष्णो इति' इति। प्रगृह्यत्वाऽभावपक्षे 'एचोऽयवायावः' इत्यनेन अवादेशे 'लोपः शाकल्यस्य' इत्यनेन वैकल्पिके वकारस्य लोपे 'विष्ण इति' इति स्थिते 'पूर्वत्राऽसिद्धम्' इत्यनेन वलोपशास्त्रस्य—'लोपः शाकल्यस्ये'त्यस्य असिद्धत्वात् 'आद्गुणः' इत्यनेन गुणाऽभावे 'विष्ण इति' इति। वलोपाऽभावपक्षे 'विष्णविति' इति।

**भानो इति** (१९३४)—अस्योत्तरं 'विष्णो इति' इतिवद् बोध्यम्।

**किम्वुक्तम्** (१९-३४, ४०)—'किमु उक्तम्' इति दशायां 'मय उञो वो

वा' इत्यनेन मकारात्परस्य उञ उकारस्य वकारादेशे 'किम्वुक्तम्' इति । वकाराऽभावपक्षे 'निपात ( एकाजनाङ् ) इत्यनेन प्रगृह्यसंज्ञायां प्लुतप्रगृह्या अचि नित्यम्' इत्यनेन प्रकृतिभावे 'किमु' उक्तम्' इति च सिद्धम् ।

'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च' ( १९२० )—'पदान्ता इकोऽसवर्णेऽचि परे प्रकृत्या स्युर्ह्रस्वश्च वा स्यादित्यर्थः । उदाहरणं तु 'चक्रि अत्र' 'चक्र्यत्र' इति ।

चक्रि अत्र ( १६–२३, २७, ४८, ५० )—'चक्री अत्र' इति स्थिते 'इको यणचि' इत्यनेन यणि प्राप्ते तं प्रबाध्य 'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च' इति विकल्पेन ह्रस्वे कृते ह्रस्वविधिसामर्थ्यात् पुनः यणोऽप्राप्त्या 'चक्रि अत्र' इति । ह्रस्वाऽभावे यणि 'चक्र्यत्र' इति च सिद्धं भवति ।

ब्रह्मर्षिः ( १९–२९, ४७, ५१ )—'ब्रह्मा ऋषिः' इति दशायाम् 'आद्गुणः' इत्यनेन गुणे प्राप्ते तम्प्रबाध्य 'ऋत्यकः' इति पाक्षिके ह्रस्वे कृते ह्रस्वविधिसामर्थ्यात् पुनः गुणस्याप्रसंगे 'ब्रह्म ऋषिः' इति। ह्रस्वाऽभावपक्षे 'आद्गुणः' इत्यनेन गुणे 'उरण् रपरः' इति रपरत्वे 'ब्रह्मर्षिः' इति सिद्धम् ।

आर्च्छत् ( १९२१ )—'ऋत्यकः' इति सूत्रस्य प्रत्युदाहरणमेतत । तथाहि अत्र सूत्रे 'पदान्ताः' इत्यस्याऽग्रहणे 'आ ऋच्छत्' इति दशायाम् 'आटश्चे'ति प्राप्तवृद्धिं प्रबाध्य ह्रस्वत्वमापद्येत तन्माभूदित्येतदर्थं पदान्ताः' इति । तेनात्र 'आटश्चे'ति वृद्धौ सत्यां रपरत्वे कृते 'आर्च्छत्' इति सिद्ध्यति ।

## सूत्रनिर्देशपूर्वकं सन्धिं कुरुत—

पितृ × ऋणम् । शुभ्र × ऋषिः । सुखस्य × औपयिकम् । अव × एति । उप × ऋच्छत् । प्र × ओषति । गोपाल × एहि । इन्दुमती × उवाच । मृदु × ओदनः । मातृ × इच्छा । लृ × आनय । ने × अनम् । कस्मै × इदम् । भो × अनम् । भौ × इष्यति । ते × आगताः । चन्द्रशेखरः × अस्मि । गो × अक्षः । आगच्छ सखे × अत्र क्रीडेमः । वद्ध × उच्छलतः । अमू × अश्नीतः । अहो × इदम् । उ × उद्धवः ।

## सूत्रनिर्देशपूर्वकं विच्छेदं कुरुत—

गुरूहः । महर्कारः । महौचित्यम् । अवैधते । उपार्णोति । प्रैषयति । अवेहि । अत्यौदरिकः । तन्वङ्गी । प्रशास्त्रर्ध्वम् । लानय ।

इति सोत्तरायां प्रश्नावल्यामच्सन्धिप्रकरणम् ।

# अथ हल्सन्धिप्रकरणम् ।

**शार्ङ्गिञ्जय** (१९२५)—'शार्ङ्गिन् जय' इति दशायां 'स्तोः श्चुना श्चुः' इत्यनेन श्चुत्वेन ञकारे उक्तं रूपं सिद्धम् ।

**तट्टीका** (१९५२)—'तत् टीका' इति स्थिते 'ष्टुना ष्टुः' इति तकारस्य ष्टुत्वेन टकारे 'तट्टीका' इति ।

**सर्पिष्टमम्** ( १९–२२,३९,४३ )—सर्पिष् तमम्, इत्यवस्थायां 'ष्टुना ष्टुः' इत्यनेन तकारस्य ष्टुत्वेन टकारे 'सर्पिष्टमम्' इति । 'न पदान्ताट्टोरनाम्' इत्यनेन ष्टुत्वनिषेधस्तु न भवति, टवर्गात्परत्वाऽभावात् । न च षकारस्य 'झलां जशोऽन्ते' इति जश्त्वेन डकारे सति तकारस्य टवर्गपरत्वात् ष्टुत्वनिषेधः स्यादेवेति वाच्यम्, 'ह्रस्वात्तादौ तद्धिते' इति विहितस्य षत्वस्याऽसिद्धत्वेन जश्त्वाभावात् ।

मूले तु 'न पदान्ताट्टोरनाम्' इति सूत्रस्य प्रत्युदाहरणमेतत् । तत्र हि टोर्ग्रहणाऽभावे 'सर्पिष्टमम्' इत्यत्राऽपि ष्टुत्वनिषेधः स्यादिति टोर्ग्रहणमावश्यकमिति ।

**यरोऽनुनासिकेऽनुनासिको वा** ( १९४१ )–यरः, अनुनासिके, अनुनासिकः, वा, इति पदच्छेदः । 'यरः पदान्तस्याऽनुनासिके परेऽनुनासिको वा स्यादित्यर्थः।

**एतन्मुरारिः** ( १९–४१,४७,५० )—एष चासौ मुरारिः 'एतन्मुरारिः' । 'एतद् मुरारिः' इति स्थिते 'यरोऽनुनासिकेऽनुनासिको वा' इत्यनेन दकारस्य अनुनासिके नकारे कृते 'एतन्मुरारिः' इति । अनुनासिकाऽभावपक्षे 'एतद्मुरारिः' इति च भवति ।

**चिन्मयम्** ( १९–३०,४५ )—'चिद् मयम्' इति दशायां 'प्रत्यये भाषायां नित्यम्' इति 'मयट्' प्रत्यये परे दकारस्य नित्यमनुनासिके नकारे 'चिन्मयम्' इति ।

**तल्लयः** ( १९४९ )—'तत् लयः' इति स्थिते 'तोर्लि' इति सूत्रेण लकारे परे तकारस्य स्थाने परसवर्णे लकारे कृते 'तल्लयः' इति जातम् ।

**विद्वाँल्लिखति** ( १९५१ )—'विद्वान् लिखति' इत्यवस्थायां 'तोर्लि' इत्यनेन परसवर्णे कृते 'विद्वाँल्लिखति' इति सिद्धम् ।

**तस्मादित्युत्तरस्य** ( १९३९ )—'पञ्चमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाऽव्यवहितस्य परस्य ज्ञेयम्' इति सूत्रार्थः । भाषार्थ यह हुआ कि 'पञ्चम्यन्त पदका उच्चारण कर जिस कार्यका विधान किया गया हो, वह कार्य उस पञ्चम्यन्तसे बोधित वर्णान्तर ( अन्यवर्ण ) से अव्यवहित ( व्यवधानरहित ) पर वर्णके स्थान

में हो। अर्थात् निमित्त और स्थानीके बीचमें अन्य वर्णको नहीं आना चाहिये। उदाहरण—उदः स्थास्तम्भोः पूर्वस्य' इस सूत्रमें 'उदः' इस पञ्चम्यन्त पदका उच्चारण करके पूर्वसवर्ण आदेशका विधान किया गया है अतः यह सूत्र 'उद्' तथा 'स्था' और 'स्तम्भ' के बीच में जब अन्य कोई वर्ण नहीं होगा तब ही पूर्व सवर्ण कर सकेगा। यथा—'उत्थानम्, उत्तम्भनम्, इत्यादि स्थलमें देखें।

**आदे परस्य:** ( १९३९ )—'परस्य यद्विहितं तत्तस्यादेर्बोध्यम्' इति सूत्रार्थः। भाषार्थ यह हुआ कि 'जो कार्य पर के स्थानमें विधान किया गया हो, वह कार्य परके आदि वर्णके स्थानमें होता है ऐसा समझना चाहिये। उदाहरण 'उत्थानम्' 'उत्तम्भनम्' है। यहां 'उद् स्थानम्' और 'उद् स्तम्भनम्' इस स्थितिमें परके आदि वर्ण सकारके स्थानमें पूर्व दकारका सवर्ण थकार होता है।

**उत्थानम्** ( १९-२७,३१,३७,४०,४८,५१ )—'उद् स्थानम्' इति दशायाम् 'उदः स्थास्तम्भोः पूर्वस्य' इति सूत्रेण 'तस्मादित्युत्तरस्ये'ति परिभाषया वर्णान्तराऽव्यवहितस्य 'स्था' इत्यस्य स्थाने पूर्वसवर्णे प्राप्ते 'आदेः परस्ये'ति सूत्रबलात् 'स्था' इत्यस्यादिभूतस्य सकारस्य स्थाने अघोषमहाप्राणप्रयत्नसाम्यात् तादृशे थकारे पूर्वसवर्णे कृते 'उद् थ् थानम्' इति जाते 'झरो झरि सवर्णे' इति दकारोत्तरवर्तिथकारस्य विकल्पेन लोपे 'खरि च' इत्यनेन दकारस्य चर्त्वे 'उत्थानम्' इति। लोपाभावपक्षे 'उत्थ्थानम्' इति च भवति। विकल्पपक्षे 'खरि चे'ति चर्त्वन्तु न, चर्त्वं प्रति थकारस्याऽसिद्धत्वात्।

**वाग्घरिः** ( १९-२८,४२,४६,५२ )—'वाक् हरिः' इति स्थिते 'झलां जशोन्ते' इति जश्त्वे कृते 'वाग् हरिः' इति दशायाम् 'झयो होऽन्यतरस्याम्' इति पूर्वसवर्णविधौ गकारस्य पूर्वनिमित्तत्वात् तत्सवर्णेषु 'क–ख–ग–घ–ङ' इत्येतेषु पञ्चस्वपि प्राप्तेषु घोषवतो नादवतो महाप्राणस्य संवृतकण्ठस्य हस्य स्थाने तादृशे घकारे जाते 'वाग्घरिः' इति सिद्धम्। पूर्वसवर्णाऽभावपक्षे 'वाग्हरिः' इति च सिद्धं भवति।

**तच्छिवः**—( १९-४०, ४१, ४३, ४९ )—'तद् शिवः' इत्यवस्थायां 'स्तोः श्चुना श्चुः', इत्यनेन दकारस्य श्चुत्वे जकारे कृते 'खरि च' इत्यनेन जकारस्य चर्त्वेन चकारे 'तच् शिवः' इति जाते 'शश्छोऽटि' इत्यनेन झयन्तःपातिनश्चकारात्परस्य शस्य अट्प्रत्याहारान्तःपातिनि शकारोत्तरवर्तिनीकारे परे छत्वे 'तच्छिवः' इति सिद्धम्। छत्वाभावे तु 'तच्शिवः' इति।

तच्छ्लोकेन (१९-२१, ३४, ४५)—'तद् श्लोकेन' इत्यवस्थायां 'स्तोः श्चुना श्चुः' इत्यनेन दस्य श्चुत्वेन जकारे कृते 'खरि च' इति चर्त्वेन चकारे 'तच् श्लोकेन' इति जाते 'छत्वममीति वाच्यम्', इति वार्तिकेन शस्य छत्वे 'तच्छ्लोकेन' इति सिद्धम् ।

त्वङ्करोषि (१९ ३९)—'त्वम् करोषि' इत्यवस्थायां 'मोऽनुस्वारः' इति सूत्रेण मस्यानुस्वारे कृते 'वा पदान्तस्य' इत्यनेन अनुस्वारस्य स्थाने परस्य ककारस्य सवर्णे 'क-ख-ग घ-ङ इति सर्वस्मिन् प्राप्ते 'स्थानेन्तरतमः' इति परिभाषया अनुस्वारस्य नासिकास्थानत्वात् तत्स्थानतुल्ये ङकारे जाते 'त्वङ्करोषि' इति निष्पन्नम् । परसवर्णाभावपक्षे 'त्वं करोषि' इति ।

किलँ ह्लादयति (१९३६)—'किम् ह्लादयति' इति स्थिते 'मोऽनुस्वारः' इत्यनेन अनुस्वारे प्राप्ते तं प्रबाध्य 'य-व-लपरे यवला वा' इति वार्तिकेन लपरके हकारे परे मकारस्य सानुनासिके लकारे कृते उक्तं रूपं सिद्धम् । पक्षे अनुस्वारे कृते 'किं ह्लादयति' इति च सिद्धं भवति ।

प्राङ्ख्षष्ठः—'प्राङ् षष्ठः' इति स्थिते 'ङ्णोः कुक्टुक् शरि' इत्यनेन ङकारस्य कुकागमे 'आद्यन्तौ टकितौ' इत्यनेन ङकाराऽन्ते जाते 'उक्' इत्यस्येत्संज्ञायां लोपे च विहिते 'प्राङ्क्षष्ठः' इति स्थिते 'चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्' इति वार्तिकेन ककारस्य द्वितीयाक्षरे खकारे 'प्राङ्ख्षष्ठः' इति, द्वितीयाक्षराभावे कषयोः संयोगे 'प्राङ्क्षष्ठः' इति, कुकागमाभावे 'प्राङ्षष्ठः' इति च रूपं सिद्धयति ।

सुगण्ठ्षष्ठः (१९४०)—'सुगण् षष्ठः' इत्यवस्थायां 'ङ्णोः कुक्टुक् शरि' इति सूत्रेण णकारस्य टुकागमे 'आद्यन्तौ टकितौ' इत्यनेन अन्तावयवे जाते अनुबन्धलोपे 'सुगण्ट्षष्ठः' इति स्थिते 'चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्' इति वार्तिकेन टकारस्य द्वितीयाक्षरे ठकारे विहिते 'सुगण्ठ्षष्ठः' इति । द्वितीयाक्षराभावे 'सुगण्ट्षष्ठः' इति, टुकागमाभावे 'सुगण्षष्ठः' इति च भवति ।

षट्त्सन्तः (१९४८)—'षड् सन्तः' इति दशायां 'डः सि धुट्' इत्यनेन 'आद्यन्तौ टकितौ' इति सूत्रसहकारात् डकारात्परस्य सस्यादौ धुटि अनुबन्धलोपे 'षड्ध् सन्तः' इति स्थिते 'खरि च' इत्यनेन धकारस्य चर्त्वे कृते पुनरनेन डकारस्य चर्त्वे टकारे कृते उक्तं रूपं सिद्धम् । धुडभावपक्षे डकारस्य चर्त्वे 'षट्सन्तः' इति च सिद्धं भवति ।

सञ्च्छम्भुः ( १९-२२, २९, ३०, ३९, ४०, ४७, ५० )—'सन् शम्भुः' इत्यवस्थायां 'शि तुक्' इत्यनेन 'आद्यन्तौ टकितौ' इति सूत्रसहकारात् शकारे परे पदान्तस्य नस्याऽन्तावयवे तुकि अनुबन्धलोपे 'सनत् शम्भुः' इति दशायां 'शश्छोऽटि' इत्यनेन शम्भुघटकस्य शस्य छत्वे 'सन् त् छम्भुः' इति जाते 'स्तोः श्चुना श्चुः' इत्यनेन तकारस्य श्चुत्वेन चकारे 'सन् च् छम्भुः' इति स्थिते पुनः 'स्तोः श्चुना श्चुः' इत्यनेन चकारयोगात् नकारस्य श्चुत्वेन ञकारे 'सञ्च्छम्भुः' इति दशायां 'झरो झरि सवर्णे' इत्यनेन वैकल्पिके चलोपे 'सञ्छम्भुः' इति प्रथमं रूपम्, चलोपाभावपक्षे 'सञ्च्छम्भुः' इति उक्तं द्वितीयं रूपम्, छत्वाऽभावपक्षे 'सञ्च्शम्भुः' इति तृतीयं रूपम्, तुगभावपक्षे तु 'सन् शम्भुः इति स्थिते नकारस्य श्चुत्वेन ञकारे 'सञ् शम्भुः' इति-च चतुर्थं रूपं सिद्धम् । तदुक्तम्—

"ञछौ ञचछा ञचशा ञशाविति चतुष्टयम् ।
रूपाणामिह तुक्-छत्वचलोपानां विकल्पनात् ॥"

**'ङमो ह्रस्वादचि ङमुण् नित्यम्'** ( १९४२ )—'ह्रस्वात्परो यो ङम् , तदन्तं यत् पदं, तस्मात् परस्याऽचो नित्यं ङमुडागमः स्यादिति सूत्रार्थः । अत्र सूत्रे 'ङमः' 'ह्रस्वात्' इति च पञ्चम्यन्तम् , 'अचि' इति षष्ठ्यर्थे सप्तमी, 'ङमुट्' इति प्रथमान्तम् , 'नित्यम्' इति क्रियाविशेषणम् ( क्रियाविशेषणानां कर्मत्वम् ) ।

**प्रत्यङ्ङात्मा** ( १९२५ )—'प्रत्यङ् आत्मा' इति स्थिते 'ङमो ह्रस्वादचि ङमुण् नित्यम्' इत्यनेन ह्रस्वात्परस्य ङम्प्रत्याहारान्तःपातिनो ङकारात्परस्य अच्प्रत्याहारान्तर्वर्तिन आकारस्य टित्वादादौ ङमुटि अनुबन्धलोपे उक्तं रूपं सिद्धम् ।

**सन्नच्युतः** ( १९ ३८, ५१ )—'सन् अच्युतः' इति दशायां 'ङमो ह्रस्वादचि ङमुण् नित्यम्' इत्यनेन ह्रस्वात्परस्य ङम्प्रत्याहारान्तःपातिनो नकारात्परस्य अच्प्रत्याहारान्तर्वर्तिनोऽकारस्य ङमुटि अनुबन्धलोपे 'सन्नच्युतः' इति सिद्धम् ।

**संस्कर्ता** ( १९-२३, ३९ )—'सम्' कर्ता' इति स्थिते 'सम्परिभ्यां करोतौ भूषणे' इति सूत्रेण सुटि अनुबन्धलोपे 'सम् स्कर्ता' इति दशायां 'समः सुटि' इति सूत्रेण सुट्सम्बन्धिनि सकारे परे समो मस्य रुत्वे अनुबन्धलोपे 'सर् स्कर्ता' इति स्थिते 'अत्राऽनुनासिकः पूर्वस्य तु वा' इत्यनेन रोः पूर्वमनुनासिके 'सँर् स्कर्ता' इति दशायां 'खरवसानयोर्विसर्जनीयः' इत्यनेन रेफस्य विसर्गे कृते 'विसर्जनीयस्य सः । इति विसर्जनीयस्य सत्त्वे प्राप्ते तं प्रबाध्य 'वा शरि' इति विसर्जनीयस्य विस-

र्जनीये प्राप्ते तमपि प्रबाध्य 'सम्पुंकानां सो वक्तव्यः' इति वार्तिकेन विसर्गस्य सत्वे 'सँस्कर्ता' इति । अनुनासिकाऽभावपक्षे तु 'अनुनासिकात्परोऽनुस्वारः । इत्यनेन अनुस्वारे कृते 'संस्कर्ता' इति ( शेषं कार्यमत्रापि पूर्ववत् ) ।

**पुंस्कोकिलः** ( १९-२३, ४२, ४७, ५० )—'पुम् कोकिलः' इति दशायां 'पुमः खय्यम्परे' इत्यनेन पुमो मस्य रुत्वे अनुबन्धलोपे 'अत्रानुनासिकः पूर्वस्य तु वा' इति सूत्रेण अनुनासिके 'पुँर् कोकिलः' इति स्थिते 'खरवसानयोर्विसर्जनीयः' इत्यनेन रेफस्य विसर्गे 'कुप्वोः≍क≍पौ च' इत्यनेन जिह्वामूलीये प्राप्ते तम्प्रबाध्य 'सम्पुंकानां सो वक्तव्यः' इति वार्तिकेन विसर्गस्य सत्वे 'पुँस्कोकिलः' इति । अनुनासिकाभावपक्षे 'अनुनासिकात्परोऽनुस्वारः' इत्यनुस्वारे कृते 'पुंस्कोकिलः' इति ( शेषं पूर्ववत् ) ।

**चक्रिंस्त्रायस्व** ( १९-२४, २९, ३० )—'चक्रिन् त्रायस्व' इत्यवस्थायां 'नश्छव्यप्रशान्' इति सूत्रेण नस्य रुत्वे अनुबन्धलोपे 'अत्रानुनासिकः पूर्वस्य तु वा' इत्यनेन अनुनासिके 'चक्रिँर् त्रायस्व' इति जाते 'खरवसानयोर्विसर्जनीयः' इत्यनेन रेफस्य विसर्गे 'विसर्जनीयस्य सः' इत्यनेन विसर्गस्य सत्वे 'चक्रिँस्त्रायस्व' इति । अनुनासिकाऽभावपक्षे 'अनुनासिकात्परोऽनुस्वारः' इत्यनेन अनुस्वारे चक्रिंस्त्रायस्व' इति ( शेषं कार्यं पूर्ववत् ) ।

**नॄन् पाहि** ( १९-२०, २९, ४८ )—'नॄन् पाहि' इत्यवस्थायां नॄन् पे' इति सूत्रेण नॄनो नस्य रुत्वे अनुबन्धलोपे 'अत्रानुनासिकः पूर्वस्य तु वा' इत्यनेन अनुनासिके 'खरवसानयोर्विसर्जनीयः' इत्यनेन रेफस्य विसर्गे कृते 'विसर्जनीयस्य सः' इत्यनेन विसर्गस्य सत्वे प्राप्ते तम्प्रबाध्य 'कुप्वोः≍क≍पौ च' इत्युपध्मानीये कृते-नॄँ≍पाहि' इति । अनुनासिकाभावपक्षे 'अनुनासिकात्परोऽनुस्वारः' इत्यनेन अनुस्वारे कृते 'नॄं≍पाहि' इति, उपध्मानीयाभावपक्षे रुत्वानुनासिकविसर्गेषु कृतेषु 'नॄँः पाहि' इति, अनुनासिकाभावपक्षे अनुस्वारे कृते नॄंःपाहि' इति, रुत्वाऽभावपक्षे तु नॄन् पाहि' इति पञ्चरूपाणि भवन्ति ।

**कांस्कान्** ( १९-२२, ४५ )—'कान् कान्' इति दशायां 'तस्य परमाम्रेडितम्' इत्यनेन परस्य 'कान्' इत्यस्याम्रेडितसंज्ञायां 'कानाम्रेडिते' इत्यनेन आम्रेडितसंज्ञके परे पूर्वस्य 'कान्' इत्यस्य नकारस्य रुत्वे अनुबन्धलोपे 'अत्राऽनुनासिकः पूर्वस्य तु वा' इत्यनेन नस्यानुनासिके 'खरवसानयोर्विसर्जनीयः' इत्यनेन रेफस्य विसर्गे 'सम्पुं-

कानां सो वक्तव्यः' इत्यनेन विसर्गस्य सत्वे 'काँस्कान्' इति। अनुनासिकाभावपक्षे तु ( अनुनासिकात्परोऽनुस्वारः ) इत्यनुस्वारे 'कांस्कान्' इति ( शेषं पूर्ववत् )।

**शिवच्छाया** ( १९-२५, ५१, ५२ )—'शिव छाया' इति दशायां 'छे च' इति वकारोत्तरवर्त्यकारस्य तुकि अनुबन्धलोपे 'शिव त् छाया' इति जाते 'झलां जशोऽन्ते' इति तस्य जश्त्वेन दकारे 'स्तोः श्चुना श्चुः' इत्यनेन दस्य श्चुत्वेन जकारे 'खरि च' इत्यनेन जस्य चर्त्वे 'शिवच्छाया' इति।

लक्ष्मीच्छाया ( १९-२८, ४९ )—'लक्ष्मी छाया' इति दशायां 'पदान्ताद्वा' इति तुकि उकि गते 'लक्ष्मी त् छाया' इति स्थिते तकारस्य जश्त्वेन दकारे स्तोः श्चुना श्चुः' इत्यनेन दकारस्य जकारे 'खरि च' इति तस्य चर्त्वे 'लक्ष्मीच्छाया' इति। तुगभावपक्षे 'लक्ष्मीछाया' इति।

## सूत्रनिर्देशपूर्वकं सन्धिं कुरुत—

तपस् × चिनोति। त्रयस् × षट्पदाः। षट् × दर्शनम्। सम्पत् × हर्षः। उद् × स्थापयति। एतद् × लीला। अप् × नामकः। दिव्यम् × सरः। नृन् × हितम्। कथम् × कृतम्। इदम् × चित्रम्। केशान् × छिनत्ति। धनवान् × स्वपिति। अप्रज्ञावान् × शत्रुः। नृन् × पालय। सम् × स्कृतम्। पुम् × छविः। हसन् × आगतः। त्वत् × श्वशुरः। आ × छादयम्।

## सूत्रनिर्देशपूर्वकं विच्छेदं कुरुत—

पयश्शीतम्। महाण्डामरः। अब्भाजनम्। तद्धेयम्। उत्तम्भते। ग्रन्थाल्ँलाति। ककुम्नायकः। मां पाहि। क्षन्तव्यम्। मधुरञ्जायति। भास्वाँश्चन्द्रः। शिशुच्छाया। नॄँः प्रतिकरोति। सँस्करोति। पुँश्चमत्कारः। एकस्मिन्नहनि। यावच्छक्यम्।

इति सोत्तरायां प्रश्नावल्यां हल्सन्धिप्रकरणम्।

# अथ विसर्गसन्धिप्रकरणम्

विष्णुः त्राता ( १९५१ )—'विष्णुः त्राता 'इत्यवस्थायां 'विसर्जनीयस्य सः' इति सूत्रेण विसर्गस्य सत्वे 'विष्णुस्त्राता' इति सिद्धम् ।

गौः चरति ( १९३४ )—'गौः चरति' इति स्थिते 'विसर्जनीयस्य सः' इत्यनेन विसर्गस्य सत्वे 'स्तोः श्चुना श्चुः' इत्यनेन सस्य श्चुत्वेन शकारे 'गौश्चरति' इति ।

शिवोऽर्च्यः ( १९२८, ३७, ४८, ५० )—'शिवस् अर्च्यः' इत्यवस्थायां 'ससजुषो रुः' इत्यनेन सकारस्य रुत्वे 'अतो रोरप्लुतादप्लुते' इत्यनेन रोरुत्वे 'शिव उ अर्च्यः' इति जाते 'आद्गुणः' इति गुणे 'एङः पदान्तादति' इति पूर्वरूपे 'शिवोऽर्च्यः' इति सिद्धम् ।

देवा इह ( १९३३, ३४, ३८, ४५ )—देवास् इह' इति दशायां 'ससजुषो रुः' इति सस्य रुत्वे 'भोभगोअघोअपूर्वस्य योऽशि' इत्यनेन रोर्यादेशे 'देवा य् इह' इति स्थिते 'लोपः शाकल्यस्य' इत्यनेन यलोपे 'देवा इह' इति, यलोपाऽभावपक्षे 'देवायिह' इति

भो देवाः ( १९३१, ४३, ४६ )—'भोस् देवाः' इति दशायां 'ससजुषो रुः' इति सस्य रुत्वे 'भोभगोअघोअपूर्वस्य योऽशि' इत्यनेन रोर्यादेशे 'हलिसर्वेषाम्' इत्यनेन यलोपे 'भो देवाः' इति सिद्धम् ।

अघो याहि ( १९५१, ५२ 'अघोस् याहि' इत्यवस्थायां 'ससजुषो रुः' इति सस्य रुत्वे 'भोभगोअघोअपूर्वस्य योऽशि' इति रोर्यादेशे 'हलि सर्वेषाम्' इत्यनेन यलोपे 'अघो याहि' इति सिद्धम् ।

अहर्गणः ( १९३५ )—'अहन् गणः' इति दशायां 'रोऽसुपि' इति सूत्रेण 'अलोन्त्यस्ये'ति परिभाषया अहन्शब्दान्तस्य नस्य रेफादेशे 'अहर्गणः' इति सिद्धम् ।

हरी रम्यः—'हरि र् रम्यः' इति दशायां 'रो रि' इत्यनेन रुसम्बन्धिरेफस्य लोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इत्यनेन इकारस्य दीर्घे 'हरी रम्यः' इति सिद्धम् ।

हरिस् × राजते । हरी राजते ( १९ ४६ )—'हरिस् राजते' इति दशायां 'ससजुषो रुः' इति सस्य रुत्वे 'हरि र् राजते' इति जाते 'रो रि' इत्यनेन रुसम्बन्धिनो रेफस्य लोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इत्यनेन दीर्घे 'हरी राजते' इति सिद्धम् ।

शम्भू राजते ( १९२५, ३६, ३८ )—'शम्भुस् राजते' इति स्थिते 'ससजुषो रुः' इति रुत्वे 'रो रि' इति रुसम्बन्धिरेफस्य लोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घे 'शम्भू राजते' इति।

तृढः ( १९२४, ४२ )—'ढ्रलोप' इति सूत्रस्य प्रत्युदाहरणमेतत्। तथा हि—'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति सूत्रे अण्ग्रहणाऽभावे 'ढरेफयोर्लोपनिमित्तयोः पूर्वस्य दीर्घः' इत्यर्थे तृह्धातोर्निष्ठायां क्तप्रत्यये अनुबन्धलोपे 'तृह् त' इति जाते 'हो ढः' इत्यनेन हस्य ढत्वे 'झषस्तथोर्धोऽधः' इत्यनेन तकारस्य धत्वे 'ष्टुना ष्टुः' इति धस्य ष्टुत्वेन ढकारे 'तृढ् ढ' इति स्थिते 'ढो ढे लोपः' इत्यनेन पूर्वस्य ढस्य लोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति सूत्रेण ढलोपनिमित्ते ढकारे परे पूर्वस्य ऋकारस्य दीर्घापत्तिः। तस्मात् सूत्रेऽण्ग्रहणमावश्यकम्। कृते त्वण्ग्रहणे तत्सामर्थ्यात् पूर्वणकारेणैवाऽणप्रत्याहारग्रहणाद् दीर्घाप्रवृत्त्या कृदन्तत्वात् सौ सकारस्य रुत्वे विसर्गे 'तृढः' इति निष्पन्नम्।

मनोरथः ( १९२८, ३२, ३९, ४१, ४३, ४७, ४९, ५१, ५२ )—'मनस्, रथः' इत्यवस्थायां 'ससजुषो रुः' इति सस्य रुत्वे 'हशि च' इत्यनेन रोरुत्वे प्राप्ते 'रो रि' इत्यनेन रेफस्य लोपे च प्राप्ते 'विप्रतिषेधे परं कार्यम्' इत्यनेन तुल्यबलविरोधे सति परत्वात् 'रो रि' इति लोपे प्राप्ते 'पूर्वत्राऽऽसिद्धम्' इत्यधिकारसूत्रेण सपादसप्ताध्यायीस्थ 'हशि चे'ति सूत्रदृष्ट्या त्रैपादिकस्य 'रो री'ति सूत्रस्याऽसिद्धत्वात् 'हशि चे'त्यनेन रोरुत्वे कृते 'मन उ रथः' इत्यवस्थायाम् 'आद्गुणः' इत्यनेन गुणे 'मनोरथः' इति सिद्धम्।

एष विष्णुः ( १९२३ )—'एषस् विष्णुः' इत्यवस्थायां रुत्वं प्रबाध्य 'एतत्तदोः सुलोपोऽकोरनञ्समासे हलि' इति सूत्रेण सुलोपे 'एष विष्णुः' इति सिद्धम्।

सस् शम्भुः। स शम्भुः ( १९३१, ४६, ५० )—'सस् शम्भुः' इति स्थिते रुत्वं प्रबाध्य 'एतत्तदोः सुलोपोऽकोरनञ्समासे हलि' इति सूत्रेण सुलोपे 'स शम्भुः' इति सिद्धम्।

सः गच्छति ( १९३४ )—'सः गच्छति' इत्यनिष्टम्, 'स गच्छति' इति साधु। तत्र हि 'सस् गच्छति' इति स्थिते रुत्वं प्रबाध्य 'एतत्तदोः सुलोपोऽकोरनञ्समासे हलि' इत्यनेन सुलोपे 'स गच्छति' इति सिद्धं भवति।

**एषको रुद्रः** ( १९२१ )—'एतत्तदोः सुलोपोऽकोरनञ्समासे हलि' इति सूत्रे 'अकोः किमि'त्यस्य प्रत्युदाहरणमेतत् । तत्र हि 'एषकस् रुद्रः' इत्यवस्थायां एतच्छब्दस्य सककारत्वात् सुलोपाभावे 'ससजुषो रुः' इत्यनेन सस्य रुत्वे 'हशि च' इत्युत्वे 'आद्गुणः' इति गुणे 'एषको रुद्रः' इति भवति । अकोरित्यस्याऽभावे त्वत्राऽपि सुलोपापत्तिः ।

**सः एषः** ( १९२७ )—'स सु एषः' इति स्थिते 'सोऽचि लोपे चेत्पादपूरणम्' इत्यनेन सुलोपाभावे 'सैष दाशरथी रामः' इत्यत्र पादो न पूर्यते अतोऽत्राऽनेन सुलोपे 'वृद्धिरेऽचि' इति वृद्धौ 'सैषः' इति सिद्धं भवति । अन्यत्र तु—'सस् एषः' इति स्थिते रुत्वे यत्वे यलोपे च कृते 'स एषः' इति भवति । एवञ्चोभयथा 'सः एषः' इत्यसाध्वेवेति तत्त्वविदः ।

**'सैष दाशरथी रामः' 'सैष राजा युधिष्ठिरः' ।**
**'सैष कर्णो महात्यागी' 'सैष भीमो महाबलः' ॥**

यह श्लोक अनुष्टुप् छन्दमें है । इसके प्रति पादमें आठ २ अक्षर होते हैं । यहां पर यदि सुलोप नहीं होता तो 'सस् × एषः' ऐसी स्थितिमें रुत्व-यत्व-यलोप होकर 'स एषः' ऐसा होजाता और प्रति पादमें एक एक अक्षर बढ़ जानेसे पादकी पूर्ति नही होती ।

## सूत्रनिर्देशपूर्वकं शुद्धस्वरूपं निर्दिश्यताम्—

जन्तामयः । केशवौर्ध्वम् । तवैदम् । स्वैरः । दिवौकसः । उपेति । प्रैषयति । रामैहि । उपरोक्तः । गवौयानम् । सखैहागच्छ । कव्यागच्छतः । अम्वततः । रामस्शेते । तत्छविः । अधिस्थाता । देवो षष्टः । दिगेशः । ददद्हसति । महान्नात्मा । विषयान्नाह । जगत्नायकः । संचितः । यम्लोकम् । गच्छन्चकोरः । मतिमान्छान्तः । पुङ्खनित्रम् । वाच्छूरः । वाक्मात्रेणेव । वृक्षछाया । बालो-क्रुध्यति । मनोकामजा । अहोगतः । सो रामः । एषो बालः । चन्द्रशेखरो चलत्यि-दानीम् । प्रातो गमनम् । अह्नो इन्द्रः । एषो नरः । हतो शत्रुः । अन्तर्राघ्रियः । भ्रातो गमय ।

इति सोत्तरायां प्रश्नावल्यां विसर्गसन्धिप्रकरणम् ।

# अथ अजन्तपुँल्लिङ्गप्रकरणम् ।

**रामान्** ( १९५०, ५२ )—रामशब्दाद् द्वितीयाबहुवचने शसि 'लशक्वतद्धिते' इति शस्येत्संज्ञायां लोपे च कृते 'राम अस्' इति स्थिते 'प्रथमयोः पूर्वसवर्णः' इत्यनेन पूर्वसवर्णदीर्घे 'रामास्' इति जाते 'तस्माच्छसो नः पुंसि' इति सस्य नत्वे कृते 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति णत्वे प्राप्ते 'पदान्तस्य' इति तन्निषेधे 'रामान्' इति रूपं सिद्धम् ।

**रामेण** ( १९२९ )—रामशब्दाद् तृतीयैकवचने टाविभक्तौ 'टाङसिङसामिनात्स्याः' इति टास्थाने इनादेशे 'राम इन' इति स्थिते 'आद्गुणः, इति गुणे 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति नस्य णत्वे 'रामेण' इति सिद्धम् ।

**रामाय** (१९२०, ३२, ३५, ३७, ३९, ४६, ५१)—रामशब्दाच्चतुर्थ्येकवचने ङे विभक्तौ 'ङेर्यः' इति ङेर्यादेशे 'राम य' इति दशायां 'स्थानिवदादेशोऽनल्विधौ' इति स्थानिवद्भावेन सुप्त्वमादाय 'सुपि च' इत्यनेन मकारोत्तरवर्तिनोऽकारस्य दीर्घे 'रामाय' इति सिद्धम् ।

**रामस्य** ( १९ २५ )—रामशब्दात् षष्ठ्येकवचनविवक्षायां ङसि 'टाङसिङसामिनात्स्याः' इत्यनेन ङसः स्यादेशे 'रामस्य' इति सिद्धम् । .

**रामाणाम्** ( १९४७, ४९ )—रामशब्दात् षष्ठीबहुवचनविवक्षायाम् आमि विभक्तौ 'राम आम्' इति स्थिते 'ह्रस्वनद्यापो नुट्' इत्यनेन नुटि उकारटकारयोरित्संज्ञायां लोपे च विहिते 'राम नाम्' इति जाते 'नामि' इत्यनेन दीर्घे 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति नस्य णत्वे 'रामाणाम्' इति सिद्धम् ।

**सर्वेषाम्** ( १९२८, ३३, ३५, ४१, ४३, ४८, ५०, ५२ )—सर्वशब्दात् षष्ठीबहुवचनविवक्षायाम् आमि 'सर्व आम्' इति स्थिते 'आमि सर्वनाम्नः सुट्' इति सुटि अनुबन्धलोपे 'सर्व साम्' इति जाते 'बहुवचने झल्येत्' इत्यनेन वकारोत्तरवर्त्तिनोऽकारस्य एत्वे 'आदेशप्रत्यययोः' इत्यनेन सस्य षत्वे 'सर्वेषाम्' इति सिद्धम् ।

**पूर्वस्मात्** ( १९३६ )—सर्वादिगणपठितात् पूर्वशब्दात् पञ्चम्येकवचनविवक्षायां ङसि 'पूर्वादिभ्यो नवभ्यो वा' इत्यनेन ङसेः स्थाने स्मादित्यादेशे जश्त्वे चर्त्वे 'पूर्वस्मात्' इति 'चर्त्वाभावपक्षे पूर्वस्मादिति । स्मादादेशाभावपक्षे तु पूर्व-

ब्दात् ङसि 'टाङसिङसामिनात्स्याः' इति ङसेः स्थाने आदादेशे 'अकः सवर्णे दीर्घः' तो दीर्घे जश्त्वे चर्त्वे च कृते 'पूर्वात्' इति। चर्त्वाभावपक्षे पूर्वादिति।

प्रथमे (१९२४)—सर्वादिगणपठितात् प्रथमशब्दात् प्रथमाबहुवचनविवक्षायां से 'प्रथमचरमतयाल्पार्धकतिपयनेमाश्च' इति सूत्रेण जसि परे विकल्पेन सर्वनामसंज्ञायां 'जसः शी' इति जसः श्यादेशे अनुबन्धलोपे 'आद्गुणः' इत्यनेन गुणे 'प्रथमे' ते। सर्वनामसंज्ञाऽभावपक्षे तु 'प्रथमयोः पूर्वसवर्णः' इति दीर्घे सस्य रुत्वे विसर्गे थमाः' इति।

द्वितीयाय (१९२२)—सर्वादिगणपठितात् द्वितीयशब्दाच्चतुर्थ्येकवचने ङे क्तौ 'तीयस्य ङित्सु वा' इति वार्तिकेन तीयप्रत्ययान्तस्य द्वितीयशब्दस्य विभाषा सर्वनामसंज्ञायां 'सर्वनाम्नः स्मै' इत्यनेन ङेः स्थाने स्मै आदेशे 'द्वितीयस्मै' ते। सर्वनामसंज्ञाऽभावपक्षे 'ङेर्यः' इति ङेर्यादेशे 'द्वितीय य' इति स्थिते 'स्थानिवदादेशोऽनल्विधौ' इति स्थानिवद्भावेन सुप्त्वमादाय 'सुपि चे'त्यनेन यकारोत्तरवर्तिनोऽकारस्य दीर्घे 'द्वितीयाय' इति सिद्धम्।

निर्जरसौ (१९३२)—निर्जरशब्दस्य प्रथमाद्विवचने द्वितीयाद्विवचने च जराया जरसन्यतरस्याम्' इत्यनेन जरसादेशे उक्तं रूपं सिद्धम्। नच जराशब्दस्य विधीयमानो जरसादेशः निर्जरशब्दे कथमिति वाच्यम्, जरसादेशस्य अङ्गाधिकारस्थत्वेन 'पदाङ्गाधिकारे तस्य च तदन्तस्य च' इति परिभाषया निर्जरशब्दस्यापि जरसादेशोचितत्वात्। नन्वेवमपि जराशब्दान्तस्य विधीयमानो जरसादेशः अनेकाल्त्वात् निर्जरशब्दस्य कृत्स्नस्यैव स्यादिति चेन्न, 'निर्दिश्यमानस्यादेशा भवन्ति' इति परिभाषायाः जागरूकत्वात्। नचैवमपि निर्जरशब्दस्य जराशब्दान्तत्वं कथमिति वाच्यम्, 'एकदेशविकृतमनन्यवत्' इति परिभाषया अर्थात् 'छिन्ने पुच्छेऽपि श्वा श्वैव, नचाऽश्वो नच गर्दभः' इति न्यायेन निर्जरशब्देऽपि जराशब्दान्तत्वस्य सुलभत्वात्। जरसादेशाभावपक्षे तु 'वृद्धिरेची'ति वृद्धौ सत्यां 'निर्जरौ' इति बोध्यम्।

'निर्जर' शब्दस्य रूपाणि (१९४०, ५०)—

| | | |
|---|---|---|
| निर्जरः | निर्जरसौ (निर्जरौ) | निर्जरसः (निर्जराः) |
| निर्जरसम् (निर्जरम्) | निर्जरसौ (निर्जरौ) | निर्जरसः (निर्जरान्) |
| निर्जरसा (निर्जरेण) | निर्जराभ्याम् | निर्जरैः |
| निर्जरसे (निर्जराय) | निर्जराभ्याम् | निर्जरेभ्यः |

| | | |
|---|---|---|
| निर्जरसः ( निर्जरात्-द् ) | निर्जराभ्याम् | निर्जरेभ्यः |
| निर्जरसः ( निर्जरस्य ) | निर्जरसोः ( निर्जरयोः ) | निर्जरसाम् (निर्जराणाम्) |
| निर्जरसि ( निर्जरे ) | निर्जरसोः ( निर्जरयोः ) | निर्जरेषु |
| हे निर्जर | हे निर्जरसौ ( निर्जरौ ) | हे निर्जरसः (निर्जराः) |

**विश्वपः** ( १९२०, ३२, ४२, ४६, ५१ )—विश्वपाशब्दाच्छशि विभक्तौ 'लशक्वतद्धिते' इति शसः सकारस्येत्संज्ञायां लोपे च कृते 'विश्वपा अस्' इति स्थिते 'सुडनपुंसकस्य' इत्यनेन 'सु-औ-जस्-अम्-औट्' इति स्वादिपञ्चवचनस्यैव सर्वनामस्थानसंज्ञाया विहितत्वात् शसो न सर्वनामस्थानसंज्ञा, तेन 'स्वादिष्वसर्वनामस्थाने' इत्यनेन सर्वनामस्थानभिन्नस्वादिषु शसादिषु परेषु पूर्वस्य विश्वपाशब्दस्य पदसंज्ञायां 'यचि भम्' इत्यनेन सर्वनामस्थानभिन्नयजादिषु स्वादिषु परेषु भसंज्ञायां च प्राप्तायां किमत्र विधेयम् इति शङ्कायाम् 'आकडारादेका संज्ञा' इत्यनेन एकैव संज्ञा भवतीति नियमात् परत्वादनवकाशत्वाच्च भसंज्ञायां सत्याम् 'आतो धातोः' इत्यनेन पकारोत्तरवर्त्याकारस्य लोपे सकारस्य रुत्वे विसर्गे 'विश्वपः' इति सिद्धम् ।

**विश्वपि** ( १९३१ )—विश्वपाशब्दस्य सप्तम्येकवचने 'विश्वपा इ' इति स्थिते 'स्वादिष्वसर्वनामस्थाने' इत्यनेन सर्वनामस्थानभिन्नङिविभक्तिपरे विश्वपाशब्दस्य पदसंज्ञायां 'यचि भम्' इत्यनेन भसंज्ञायां च प्राप्तायां किमत्र विधेयम् इति शंकायाम् 'आकडारादेकासंज्ञा' इत्यनेन एकैव संज्ञा भवतीति नियमात् परत्वादनवकाशत्वाच्च भसंज्ञायां सत्याम् 'आतो धातोः' इत्यनेन पकारोत्तरवर्त्याकारस्य लोपे 'विश्वपि' इति सिद्धम् ।

**हरिणा** ( १९२९ )—हरिशब्दात्तृतीयैकवचने टाविभक्तौ 'शेषो घ्यसखि' इत्यनेन हरिशब्दस्य घिसंज्ञायाम् 'आङो नाऽस्त्रियाम्' इति सूत्रेण घिसंज्ञकात् ( हरिशब्दात् ) परस्य आङः ( 'टा' इत्यस्य ) नादेशे 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति णत्वे 'हरिणा' इति सिद्धम् ।

**हरेः** ( १९३३, ३८ )—हरिशब्दात् पंचम्येकवचने षष्ठ्येकवचने च अनुबन्धलोपे सति 'हरि अस्' इति स्थिते 'शेषो घ्यसखि' इत्यनेन घिसंज्ञायां 'घेर्ङिति' इति गुणे 'ङसिङसोश्च' इति पूर्वरूपे सकारस्य रुत्वे विसर्गे 'हरेः' इति सिद्धम् ।

**हरौ** ( १९४५, ५२ ) हरिशब्दात् सप्तम्येकवचने ङौ समागते अनुबन्धलोपे 'शेषो घ्यसखि' इति घिसंज्ञायाम् 'अच्च घेः' इत्यनेन ङेरौत्वे घिसंज्ञकस्य रेफोत्तरव-

र्तिनः इकारस्य स्थाने अकारे च विहिते 'हर औ' इति स्थिते 'वृद्धिरेचि' इति वृद्धौ 'हरौ' इति सिद्धम् ।

**सखा** ( १९४०, ४३, ४६, ४९ )—सखिशब्दात् सौ विभक्तौ अनुबन्धलोपे 'सखि स्' इति स्थिते 'यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्' इति अङ्गसंज्ञायाम् 'अनङ् सौ' इत्यनेन 'ङिच्चे'ति सूत्रबलात् सखिशब्दघटकखकारोत्तरवर्तिनः इकारस्य अनङि अनुबन्धलोपे 'सखन् स्' इति दशायाम् 'अलोन्त्यात्पूर्व उपधा' इत्यनेन उपधासंज्ञायां 'सर्वनामस्थाने चाऽसम्बुद्धौ' इत्यनेन नान्तस्य पदस्योपधायाः दीर्घे 'सखान् स्' इति दशायाम् 'अपृक्त एकाल्प्रत्ययः' इत्यनेन सस्य अपृक्तसंज्ञायाम् 'हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्' इत्यनेन सस्य लोपे 'नलोपः प्रातिपदिकान्तस्य' इति नलोपे 'सखा' इति सिद्धम् ।

**सख्या** ( १६३० )—सखि शब्दात् टाविभक्तौ अनुबन्धलोपे 'सखि आ' इति स्थिते असखीति पर्युदासाद् घिसंज्ञाऽभावेन नादेशाभावात् 'इको यणचि' इत्यनेन यणि 'सख्या' इति सिद्धम् ।

**सख्युः** ( १९२४ )—सखिशब्दस्य पञ्चम्येकवचने षष्ठ्येकवचने च विभक्तौ अनुबन्धलोपे 'सखि अस्' इति दशायाम् 'इको यणचि' इति यणि 'सख् य् अस्' इति स्थिते 'ख्यत्यात्परस्य' इत्यनेन असोऽकारस्य उत्वे सकारस्य रुत्वे विसर्गे 'सख्युः' इति सिद्धम् ।

**सख्यौ** ( १९३४ )—सखिशब्दात् सप्तम्येकवचनविवक्षायाम् 'शेषो घ्यसखि' इति सूत्रेऽसखीत्युक्तत्वात् घित्वाभावेन 'अच्च घेः' इत्यस्याप्रवृत्या 'औत्' इति सूत्रेण ङेरौत्वे 'सखि औ' इति स्थिते 'इको यणचि' इत्यनेन यणि 'सख्यौ' इति सिद्धम् ।

**'सखि' शब्दस्य रूपाणि** ( १६३८ ४१, ४३, ४७ )—

| | | |
|---|---|---|
| सखा | सखायौ | सखायः |
| सखायम् | सखायौ | सखीन् |
| सख्या | सखिभ्याम् | सखिभिः |
| सख्ये | सखिभ्याम् | सखिभ्यः |
| सख्युः | सखिभ्याम् | सखिभ्यः |
| सख्युः | सख्योः | सखीनाम् |
| सख्यौ | सख्योः | सखिषु |
| हे सखे | हे सखायौ | हे सखायः |

**पत्यौ** ( १९२९, ३५, ५१ )—पतिशब्दात् ङिविभक्तौ 'पतिः समास एवे'ति सूत्रेण निषेधादऽत्राऽसमासे घित्वाऽभावेन 'अच्च घेः' इत्यस्याऽप्राप्तया 'औत्' इत्यनेन ङेरौत्वे 'इको यणचि' इति यणि 'पत्यौ' इति सिद्धम् ।

**कति** ( १९२२, २४, ३० )—बहुत्वविशिष्टवाचकात् कतिशब्दात् प्रथमाबहुवचने द्वितीयाबहुवचने च जसि शसि च विभक्तौ 'बहुगणवतुडति संख्या' इति सूत्रेण डत्यन्तत्वात् कतिशब्दस्य संख्यासंज्ञायां 'डति च' इत्यनेन षट्संज्ञायां 'षड्भ्यो लुक्' इत्यनेन जश्शसोर्लुकि, जसि 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति प्रत्ययलक्षणेन 'जसि च' इति कतिशब्दस्येकारस्य गुणे प्राप्ते 'न लुमताऽङ्गस्य' इत्यनेन अङ्गकार्यस्य गुणस्य निषेधे 'कति' इति सिद्धम् ।

**त्रयाणाम्** ( १९४६ )—त्रिशब्दादामि 'त्रेस्त्रयः' इत्यनेन त्रिशब्दस्य त्रयादेशे कृते 'ह्रस्वनद्यापो नुट्' इति नुटि अनुबन्धलोपे 'नामि' इति दीर्घे 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति णत्वे 'त्रयाणाम्' इति सिद्धम् ।

**गौणत्वेऽपि 'प्रियत्रयाणाम्' इति**—अत्र 'गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः' इति न्यायात् त्रिशब्दस्यान्यपदार्थे विशेषणत्वेन गौणत्वात् 'त्रेस्त्रयः' इति त्रयादेशो न स्यादिति तु नाशंक्यः, गौणमुख्यन्यायस्य पदकार्यविषयत्वात् ।

**प्रथमलिङ्गग्रहणं च**—समासादिवृत्तिप्रवृत्तेः पूर्वं स्त्रीलिङ्गस्य सतः वृत्तिदशायामुपसर्जनतया स्त्रीलिङ्गत्वाभावेऽपि नदीत्वं वक्तव्यमित्यर्थः । यथा—'श्रेयसी' शब्दः समासवृत्तिप्रवृत्तेः प्राक् नित्यस्त्रीलिङ्गः, पश्चात् 'बहु' इत्यनेन समस्तः पुंल्लिङ्गः सन्नपि नदीसंज्ञको भवत्येवेति ।

**भावार्थ** इसका यह है कि—जो शब्द पहले नित्यस्त्रीलिंग हो और बादमें समासादि वृत्ति होने पर नित्यस्त्रीलिंग नहीं भी रहे तो भी उसकी नदीसंज्ञा हो ।

**बहुश्रेयस्याः** ( १९३७ )—बहुश्रेयसीशब्दात् पंचम्येकवचने ङसि अनुबन्धलोपे 'बहुश्रेयसी अस्' इति स्थिते 'प्रथमलिङ्गग्रहणं च' इति वार्तिकेन नदीसंज्ञायाम् 'आण्नद्याः' इत्यादि अनुबन्धलोपे 'बहुश्रेयसी आ अस्' इति स्थिते 'आटश्च' इति वृद्धौ 'बहुश्रेयसी आस' इति दशायाम् 'इको यणचि' इति यणि अनुबन्धलोपे सकारस्य रुत्वे विसर्गे 'बहुश्रेयस्याः' इति सिद्धम् ।

**बहुश्रेयसीनाम्** ( १९४६ )—बहुश्रेयसीशब्दस्य आमि विभक्तौ 'बहुश्रेयसी आम्' इति स्थिते 'प्रथमलिङ्गग्रहणं च' इति वार्तिकेन नदीसंज्ञायां 'ह्रस्वनद्यापो नुट्'

इत्यनेन नद्यन्तत्वान्नुटि अनुबन्धलोपे 'नामि' इत्यनेन दीर्घे 'बहुश्रेयसीनाम्' इति सिद्धम्।

**बहुश्रेयस्याम्** ( १६२२, ३१, ४२, ४५ )—बहुश्रेयसीशब्दात् सप्तम्येकवचने ङिविभक्तौ अनुबन्धलोपे 'प्रथमलिङ्गग्रहणं च' इति वार्तिकेन नदीसंज्ञायां 'ङेराम्नद्याम्नीभ्यः' इत्यनेन ङेरामि कृते स्थानिवद्भावेन ङित्वमादाय 'आण्नद्याः' इत्यादि अनुबन्धलोपे 'आटश्च' इति वृद्धौ 'इको यणचि' इति यणि 'बहुश्रेयस्याम्' इति सिद्धम्।

**प्रध्यम्** ( १९३६ )—प्रधीशब्दाद् द्वितीयैकवचने अमि 'प्रधी अम्' इति स्थिते 'अमि पूर्वः' इति पूर्वरूपे प्राप्ते तं प्रबाध्य 'अचिश्नुधातुभ्रुवां य्वोरियङुवङौ' इति इयङि प्राप्ते तमपि प्रबाध्य 'एरनेकाचोऽसंयोगपूर्वस्य' इति यणि 'प्रध्यम्' इति।

**प्रध्यि** ( १९३८, ४५ )—प्रधीशब्दात् सप्तम्येकवचने ङौ अनुबन्धलोपे 'प्रधी इ' इति स्थिते सवर्णदीर्घं प्रबाध्य इयङि प्राप्ते तमपि प्रबाध्य 'एरनेकाचोऽसंयोगपूर्वस्य' इति यणि 'प्रध्यि' इति सिद्धम्।

**ग्रामण्याम्** ( १९४५ )—'ग्रामं नयति = नियच्छति इति ग्रामणीः'। तस्य सप्तम्येकवचने ङौ अनुबन्धलोपे 'ग्रामणी इ' इति स्थिते 'ङेराम्नद्याम्नीभ्यः' इत्यनेन नीशब्दात्परस्य ङेरामि 'ग्रामणी आम्' इति दशायाम् 'एरनेकाचोऽसंयोगपूर्वस्य' इति यणि 'ग्रामण्याम्' इति सिद्धम्।

**क्रोष्टा** ( १९२१, ३० )—क्रोष्टुशब्दात् सौ अनुबन्धलोपे 'तृज्वत्क्रोष्टुः' इति तृज्वद्भावे 'क्रोष्टृ स्' इति दशायाम् 'ऋतो ङिसर्वनामस्थानयोः' इति गुणे प्राप्ते तम्प्रबाध्य 'ऋदुशनस्पुरुदंसोऽनेहसां च' इत्यनङि अनुबन्धलोपे 'क्रोष्टन् स्' इति स्थिते 'अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम्' इत्यनेन उपधादीर्घे 'हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्' इत्यनेन सुलोपे 'न लोपः प्रातिपदिकान्तस्य' इति नलोपे 'क्रोष्टा' इति सिद्धम्।

**क्रोष्टुः** ( १९२४, २५, ३३, ४१, ४३, ५१ )—क्रोष्टुशब्दात् पञ्चम्येकवचने ङसि अनुबन्धलोपे 'क्रोष्टु अस्' इति स्थिते 'विभाषा तृतीयादिष्वचि' इति तृज्वद्भावे 'क्रोष्टृ अस्' इति जाते 'ऋत उत्' इत्यनेन उत्वे रपरत्वे च कृते 'क्रोष्टुस्' इति स्थिते 'रात्सस्य' इत्यनेन सलोपे 'खरवसानयोर्विसर्जनीयः' इति रेफस्य विसर्गे 'क्रोष्टुः' इति। तृज्वद्भावाऽभावपक्षे 'शेषो घ्यसखि' इत्यनेन घिसंज्ञायां 'घेर्ङिति' इति गुणे 'ङसिङसोश्च' इति पूर्वरूपे सस्य रुत्वे विसर्गे 'क्रोष्टोः' इति च सिद्धं भवति।

'क्रोष्टु' शब्दस्य रूपाणि—

| | | |
|---|---|---|
| क्रोष्टा | क्रोष्टारौ | क्रोष्टारः |
| क्रोष्टारम् | क्रोष्टारौ | क्रोष्टून् |
| क्रोष्ट्रा–क्रोष्टुना | क्रोष्टुभ्याम् | क्रोष्टुभिः |
| क्रोष्ट्रे–क्रोष्टवे | क्रोष्टुभ्याम् | क्रोष्टुभ्यः |
| क्रोष्टुः–क्रोष्टोः | क्रोष्टुभ्याम् | क्रोष्टुभ्यः |
| क्रोष्टुः–क्रोष्टोः | क्रोष्ट्रोः–क्रोष्ट्वोः | क्रोष्टूनाम् |
| क्रोष्टरि–क्रोष्टौ | क्रोष्ट्रोः–क्रोष्ट्वोः | क्रोष्टुषु |
| हे क्रोष्टा | हे क्रोष्टारौ | हे क्रोष्टारः । |

'अतिचमू' शब्दस्य रूपाणि ( १६४० )—

| | | |
|---|---|---|
| अतिचमूः | अतिचम्वौ | अतिचम्वः |
| अतिचमूम् | अतिचम्वौ | अतिचमून् |
| अतिचम्वा | अतिचमूभ्याम् | अतिचमूभिः |
| अतिचम्वै | अतिचमूभ्याम् | अतिचमूभ्यः |
| अतिचम्वाः | अतिचमूभ्याम् | अतिचमूभ्यः |
| अतिचम्वाः | अतिचम्वोः | अतिचमूनाम् |
| अतिचम्वाम् | अतिचम्वोः | अतिचमूषु |
| हे अतिचमु | हे अतिचम्वौ | हे अतिचम्वः |

**धातृशब्दस्य सम्बोधने रूपाणि ( १९४५ )—**

पुँल्लिङ्गे—हे धातः, हे धातारौ, हे धातारः ।

नपुंसके—हे धातः– हे धातृ, हे धातृणी, हे धातॄणि ।

**पितरौ** ( १९४७, ४९ )—पितृशब्दात् प्रथमाद्विवचने औविभक्तौ 'ऋतो ङिसर्वनामस्थानयोः' इत्यनेन गुणे रपरत्वे च कृते 'पितरौ' इति । अत्र व्युत्पत्तिपक्षे नप्त्रादिग्रहणस्य नियमार्थत्वात् 'अप्तृन्नि'ति दीर्घो न । अव्युत्पत्तिपक्षे तु अप्तृन्तृजादिष्वनन्तर्भावात् दीर्घशङ्कैव नोदेतीति ।

नियमप्रकारस्त्वित्थम्—'अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम्' इति सूत्रे 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' इति पक्षे नप्त्रादीनां सप्तानां तृन्नन्तत्वात्तृजन्तत्वाच्च तृन्तृच्ग्रहणेनैव दीर्घे सिद्धे नप्त्रादिग्रहणं, 'सिद्धे सत्यारभ्यमाणो

विधिर्नियमाय भवती'ति सिद्धान्तात् नियमार्थम्—'तृन्तृजन्तानां चेत्तर्हि नप्त्रादीनां वे'ति । नियमेन च स्वेतरस्वजातीयव्यावृत्तिः क्रियते, इति नप्त्रादीतरोणादिनिष्पन्नतृन्नन्ततृजन्तशब्दानां न दीर्घ इति ।

पितरि (१९४३)—पितृशब्दात्सप्तम्येकवचने 'ऋतो ङिसर्वनामस्थानयोः' इ गुणे रपरे च कृते 'पितरि' इति सिद्धम् ।

'पितृ' शब्दस्य रूपाणि ( १९४७ )—

| | | |
|---|---|---|
| पिता | पितरौ | पितरः |
| पितरम् | पितरौ | पितॄन् |
| पित्रा | पितृभ्याम् | पितृभिः |
| पित्रे | पितृभ्याम् | पितृभ्यः |
| पितुः | पितृभ्याम् | पितृभ्यः |
| पितुः | पित्रोः | पितॄणाम् |
| पितरि | पित्रोः | पितृषु |
| हे पितः | हे पितरौ | हे पितरः । |

नृणाम् ( १६४८ )—नृशब्दात् षष्ठ्येकवचने आमि 'ह्रस्वनद्यापो नुट्' इति नु अनुबन्धलोपे 'नृ नाम्' इति स्थिते 'नामि' इति दीर्घे प्राप्ते तम्प्रबाध्य 'नृ च' इत्यनेन विभाषया दीर्घे 'ऋवर्णान्नस्य णत्वं वाच्यम्' इति णत्वे 'नॄणाम्' इति दीर्घाऽभावपक्षे 'नृणाम्' इति । अत्र 'नामीत्यनेन दीर्घस्तु न' सकृद्गतौ यद्बाधि तद्बाधितमेवेति सिद्धान्तात् ।

नरि ( १९२३ )—नृशब्दात् ङौ विभक्तौ 'नृ इ' इति दशायाम् 'ऋतो ङिस र्वनामस्थानयोः' इति गुणे रपरे च कृते 'नरि' इति सिद्धम् ।

औतोऽम्शसोः ( १९५१ )—'आ-ओतः, अम्-शसोः' इति पदविभागः ओकारादम्शसोरचि आकार एकादेशः स्यादिति सूत्रार्थः। उदाहरणन्तु 'गाम्' इति

गाम् (१९५२)—गोशब्दाद् द्वितीयैकवचने अमि 'गो अम्' इति स्थिते 'औ ऽम्शसोः' इति सूत्रेण गोशब्दस्यौकारस्य आकारैकादेशे पूर्वरूपे 'गाम्' इति ।

गाः ( १९४० )—गोशब्दाच्छसि' अनुबन्धलोपे 'औतोम्शसोः' इत्याकारैक देशे सवर्णदीर्घे सस्य रुत्वे विसर्गे 'गाः' इति ।

इति सोत्तरायां प्रश्नावल्यामजन्तपुँल्लिङ्गप्रकरणम् ।

# अथ अजन्तस्त्रीलिङ्गप्रकरणम् ।

**रमायाः** ( १९२०, २५ )—रमाशब्दात् ङसौ ङसि वा 'रमा अस्' इति स्थिते 'याडापः' इति याटि अनुबन्धलोपे 'अकः सवर्णे दीर्घः' इति दीर्घे सकारस्य रुत्वे विसर्गे 'रमायाः' इति सिद्धम् ।

**सर्वस्यै** ( १९२०, ३७, )—सर्वाशब्दात् ङेविभक्तौ 'सर्वा ए' इति स्थिते 'याडापः' इति याटि प्राप्ते तं बाधित्वा 'सर्वनाम्नः स्याड्ढ्रस्वश्च' इति स्याटि आबन्तस्य ह्रस्वे च कृते अनुबन्धलोपे 'सर्वस्या ए' इति स्थिते 'वृद्धिरेचि' इति वृद्धौ 'सर्वस्यै' इति सिद्धम् ।

**सर्वस्याम्** ( १९३१, ३२ )—सर्वाशब्दात् ङिविभक्तौ 'ङेराम्नद्याम्नीभ्यः' इति ङेरामि 'सर्वनाम्नः स्याड्ढ्रस्वश्च' इत्यनेन स्याटि आबन्तस्य ह्रस्वे च कृते 'सर्वस्या आम्' इति स्थिते 'अकः सवर्णे दीर्घः' इति दीर्घे 'सर्वस्याम्' इति सिद्धम् ।

**जरसौ** ( १९२० )—जराशब्दात् प्रथमाद्विवचने 'जरा औ' इति स्थिते 'जराया जरसन्यतरस्याम्' इति सूत्रेण जरसादेशे 'जरसौ' इति । जरसादेशाभावपक्षे तु 'जरा औ' इति स्थिते 'औङ आपः' इत्यनेन औङः शयादेशे 'आद्गुणः' इति-गुणे 'जरे' इति भवति ।

**ङिति ह्रस्वश्च** ( १९४७ )—अत्र 'इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ङिति नदीसंज्ञौ वास्तः' इत्यर्थकं 'ङिति' इत्येकं वाक्यम् । 'ह्रस्वाविवर्णोवर्णौ ङिति' स्त्रियां नदीसंज्ञौ वा स्तः' इत्यर्थकं 'ह्रस्वश्च' इत्यपरं वाक्यम् । तत्र 'नेयङुवङ्स्थानावस्त्री' इत्यतोऽनुवृत्ताऽस्त्रीति तु इयङुवङ्स्थानावित्यादिप्रथमवाक्यविहितनदीत्वस्यैव पर्युदासः, न तु ह्रस्वावित्यादिद्वितीयवाक्यविहितनदीत्वस्याऽपि, तत्सम्बद्धस्यैवानुवृत्तेः । तथा च भाषार्थ यह हुआ कि–ईयङ्–उवङ् के स्थानी रहे, स्त्री शब्द से भिन्न रहे, नित्यस्त्रीलिंग रहे, ऐसा जो दीर्घ ईकार और ऊकार उनकी नदी संज्ञा हो ङित्के परे, विकल्पसे । तथा ह्रस्व इवर्ण और उवर्ण की भी स्त्रीलिंगमें नदीसंज्ञा हो ङित्के परे, विकल्पसे । अत एव 'अतिस्त्रियै' अतिस्त्रये' ये दो रूप सिद्ध हुए ।

**मत्यै, मतये** ( १९२४, ५२ )—मतिशब्दाच्चतुर्थ्येकवचने ङेविभक्तौ अनुबन्धलोपे 'मति ए' इति स्थिते 'ङिति ह्रस्वश्च' इति नदीसंज्ञायाम् 'आण्नद्याः' इत्याटि अनुबन्धलोपे 'मति आ ए' इति स्थिते 'आटश्च' इति वृद्धौ 'इको यणचि'

इति यणि 'मत्यै' इति । नदीत्वाभावपक्षे 'शेषो घ्यसखि' इति घिसंज्ञायां 'घे॑र्ङिति' इति गुणे 'एचोऽयवायावः' इत्ययादेशे 'मतये' इति च सिद्धम् ।

मत्याम् ( १९२८, २६, ३१, ३५, ४१, ४६, ५०, ५१ )—मतिशब्दात् ङ्येकवचने ङिविभक्तौ 'ङिति ह्रस्वश्च' इति नदीसंज्ञायाम् 'इदुद्भ्याम्' इति ङेरामि स्थानिवद्भावेन ङित्वमादाय 'आण्नद्याः' इत्याडागमे अनुबन्धलोपे 'आटश्च' इति 'इको यणचि' इति यणि 'मत्याम्' इति । नदीसंज्ञाऽभावे 'शेषो घ्यसखि' इति घियाम् 'अच्च घेः' इति ङेरौत्वे घेरकारादेशे च कृते 'वृद्धिरेचि' इति वृद्धौ 'मतौ' च रूपं सिद्धम् ।

मतिशब्दस्य रूपाणि ( १६४२ )—

| | | |
|---|---|---|
| मतिः | मती | मतयः |
| मतिम् | मती | मतीः |
| मत्या | मतिभ्याम् | मतिभिः |
| मत्यै–मतये | मतिभ्याम् | मतिभ्यः |
| मत्याः–मतेः | मतिभ्याम् | मतिभ्यः |
| मत्याः–मतेः | मत्योः | मतीनाम् |
| मत्याम्–मतौ | मत्योः | मतिषु |
| हे मते | हे मती | हे मतयः |

तिस्रः ( १९२२, २७, ३३, ४३, ५२ )—त्रिशब्दाज्जसि अनुबन्ध 'त्रिचतुरोः स्त्रियां तिसृचतसृ' इति त्रिशब्दस्थाने 'तिसृ' इत्यादेशे 'तिसृ अस्' स्थिते 'ऋतो ङी'ति गुणे प्राप्ते तम्प्रबाध्य 'प्रथमयोः' इति पूर्वसवर्णदीर्घे प्राप्ते त प्रबाध्य 'अचि र ऋतः' इति ऋकारस्य रेफादेशे सकारस्य रुत्वे विसर्गे 'तिस्रः' । एवं शसि विभक्तावपि तिस्रादेशे सति 'प्रथमयोः' इति पूर्वसवर्णदीर्घं बाधित्वा रेफ सकारस्य रुत्वे विसर्गे 'तिस्रः' इति बोध्यम् ।

तिसृणाम् ( १९४२, ४६ )—त्रिशब्दस्य षष्ठीबहुवचने 'त्रि आम्' इति 'त्रिचतुरोः स्त्रियां तिसृचतसृ' इति त्रिशब्दस्य स्थाने 'तिसृ' इत्यादेशे 'तिसृ आम्' इति जाते 'नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन' इति बलात् 'अचि र ऋतः' प्राप्तं रेफादेशं बाधित्वा 'ह्रस्वनद्यापो नुट्' इति नुटि अनुबन्धलोपे 'तिसृ नाम्' स्थिते 'नामि' इति सूत्रेण दीर्घे प्राप्ते 'न तिसृ चतसृ' इति निषेधे 'ऋवर्णान्नस्य णत्वं वाच्यम्' इति णत्वे 'तिसृणाम्' इति सिद्धम् ।

त्रिषु लिङ्गेषु द्वि-शब्दस्य रूपाणि (१६३९)—(द्विशब्दो नित्यं द्विवचनान्तः)

पुंसि—द्वौ, द्वौ, द्वाभ्याम्, द्वाभ्याम्, द्वाभ्याम्, द्वयोः, द्वयोः।

स्त्रियाम्-द्वे, द्वे „ „ „ „ „

क्लीबे—„ „ „ „ „ „ (त्यदादेः सम्बोधनन्नास्ति)

त्रिषु लिङ्गेषु त्रिशब्दस्य रूपाणि (१९३९)—(त्रिशब्दो नित्यं बहुवचनान्तः)

पुंसि—त्रयः, त्रीन्, त्रिभिः, त्रिभ्यः, त्रिभ्यः, त्रयाणाम्, त्रिषु। हे त्रयः।

स्त्रियाम्—तिस्रः, तिस्रः, तिसृभिः, तिसृभ्यः, तिसृभ्यः, तिसृणाम्, तिसृषु। हे तिस्रः। क्लीबे-त्रीणि, त्रीणि, त्रिभ्यः, त्रिभ्यः, त्रिभ्यः, त्रयाणाम्, त्रिषु। हे त्रीणि।

**स्त्रियम्** (१९३८, ४७, ४९)—स्त्रीशब्दाद्द्वितीयैकवचने अमि 'स्त्री अम्' इति स्थिते 'वाऽम्शसोः' इत्यनेन इयङि अनुबन्धलोपे 'स्त्रियम्' इति। इयङभावे 'अमि पूर्वः' इति पूर्वरूपे 'स्त्रीम्' इति च भवति।

**स्त्रियै** (१९३९)—स्त्रीशब्दाच्चतुर्थ्येकवचने ङेविभक्तौ अनुबन्धलोपे 'यूस्त्र्याख्यौ नदी' इति सूत्रेण नदीसंज्ञायाम् 'आण्नद्याः' इत्यादि अनुबन्धलोपे 'आटश्च' इति वृद्धौ 'स्त्रियाः' इत्यनेन इयङादेशे अनुबन्धलोपे 'स्त्रियै' इति सिद्धम्।

**स्त्रीणाम्** (१६४५)—स्त्रीशब्दाद् आमि विभक्तौ 'स्त्री आम्' इति स्थिते 'यूस्त्र्याख्यौ नदी' इति सूत्रेण नदीसंज्ञायां 'ह्रस्वनद्यापो नुट्' इत्यनेन नद्यन्तत्वान्नुटि अनुबन्धलोपे 'स्त्री नाम्' इति स्थिते पर्यन्यवल्लक्षणप्रवृत्तिरिति 'नामि' इत्यनेन दीर्घे 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति णत्वे 'स्त्रीणाम्' इति सिद्धम्।

**श्रियै**—श्रीशब्दात् ङेविभक्तौ अनुबन्धलोपे 'श्री ए' इति दशायां 'यू स्त्र्याख्यौ नदी' इत्यनेन नदीसंज्ञायां प्राप्तायां 'नेयङुवङ्स्थानावस्त्री' इति निषेधे कृते 'ङिति ह्रस्वश्च' इत्यनेन विकल्पेन नदीसंज्ञायाम् 'आण्नद्याः' इत्यादि 'आटश्च' इति वृद्धौ 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' इति इयङि अनुबन्धलोपे 'श्रियै' इति। नदीत्वाऽभावे इयङि 'श्रिये' इति भवति।

**श्रीणाम्** (१९२१, ३६)—श्रीशब्दाद् आमि 'श्री आम्' इति स्थिते 'वामि' इत्यनेन नदीसंज्ञायां 'ह्रस्वनद्यापो नुट्' इत्यनेन नद्यन्तत्वान्नुटि अनुबन्धलोपे 'नामि' इति दीर्घे 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति णत्वे 'श्रीणाम्' इति। नदीत्वाऽभावपक्षे 'अचिश्नुधातुभ्रुवां य्वोरियङुवङौ' इति इयङि 'श्रियाम्' इति च सिद्धम्।

**भ्रुवाम्** ( १९३४ )—भ्रूशब्दात् सप्तम्येकवचने ङौ विभक्तौ ङिति ह्रस्वश्च' इति नदीसंज्ञायां प्राप्तायां 'नेयङुवङ्स्थानावस्त्री' इति निषेधे कृते 'वामि' इत्यनेन विकल्पेन नदीसंज्ञायां ङेराम्नद्याम्नीभ्यः' इत्यनेन ङेरामि 'आण्नद्याः' इत्यादि 'आटश्च' इति वृद्धौ 'भ्रू आम्' इति स्थिते 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' इत्यनेन उवङि अनुबन्धलोपे 'भ्रुवाम्' इति । नदीत्वाऽभावे उवङि 'भ्रुवि' इति च सिद्धं भवति ।

**क्रोष्ट्री**—क्रोष्टुशब्दात् स्त्रीत्वविवक्षायां 'स्त्रियां च' इति सूत्रेण तृज्वद्भावे 'क्रोष्टृ' इति जाते 'ऋन्नेभ्यो ङीप्' इति ऋदन्तत्वात् ङीपि 'क्रोष्टृ ई' इति स्थिते यणि क्रोष्ट्री' शब्दो निष्पन्नः, तस्मात् सौ 'हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्' इत्यनेन सुलोपे 'क्रोष्ट्री' इति सिद्धम् ।

इति सोत्तरायां प्रश्नावल्यामजन्तस्त्रीलिङ्गप्रकरणम् ।

---

# अथ अजन्तनपुंसकलिङ्गप्रकरणम् ।

**ज्ञानानि** ( १९२०, २२, ४९ )—ज्ञानशब्दात् जसि शसि च विभक्तौ 'जश्शसोः शिः' इति सूत्रेण जश्शसोः स्थाने श्यादेशे 'ज्ञान इ' इति दशायां 'शि सर्वनामस्थानम्' इत्यनेन 'शि' इत्यस्य सर्वनामस्थानसंज्ञायां 'नपुंसकस्य झलचः' इत्यनेन 'मिदचोन्त्यात्परः' इति सूत्रसहकारात् अन्त्याजूरूपस्य नस्यान्त्यावयवीभूते नुमि अनुबन्धलोपे 'ज्ञानन् इ' इत्यवस्थायां 'सर्वनामस्थाने चाऽसम्बुद्धौ' इत्यनेन उपधादीर्घे 'ज्ञानानि' इति सिद्धम् ।

**कतरत्**—कतरशब्दात् सौ 'कतर सु' इत्यवस्थायाम् 'अतोऽम्' इति सूत्रं प्रबाध्य 'अद्ड्डतरादिभ्यः पञ्चभ्यः' इत्यनेन 'सु' इत्यस्य स्थाने अद्डि अनुबन्धलोपे 'कतर अद्' इत्यवस्थायां क्लीबे 'शि' इत्यस्यैव सर्वनामस्थानसंज्ञाया विहितत्वाद्, असर्वनामस्थानिके 'अदि' परे 'कतर' इत्यस्य भसंज्ञायाम् 'टेः' इत्यनेन टिसंज्ञकस्य रेफोत्तरवर्त्यकारस्य लोपे 'कतरद्' इति भूते 'वाऽवसाने' इति दस्य चर्त्वे 'कतरत्' इति । चर्त्वाभावे तु 'कतरद्' इति बोध्यम् ।

**वारिणे** ( १९२४, ४१, ४३ )—वारिशब्दाच्चतुर्थ्येकवचने 'वारि ए' इति दशायां 'शेषो घ्यसखि' इति सूत्रेण घिसंज्ञायां 'घेर्ङिति' इति गुणे प्राप्ते 'वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम्पूर्वविप्रतिषेधेन' इति पूर्वविप्रतिषेधस्य प्रबलत्वात् 'इकोऽचि विभक्तौ' इति नुमि 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति णत्वे 'वारिणे' इति सिद्धम् ।

**वारीणाम्** ( १९२९, ३३, ४५ )—वारिशब्दात् षष्ठीबहुवचने 'वारि आम्' इति स्थिते 'ह्रस्वनद्यापो नुट्' इति प्राप्तं नुटं बाधित्वा परत्वाद् 'इकोऽचि विभक्तौ' इति नुमि प्राप्ते 'नुमचिरतृज्वद्भावेभ्यो नुट्पूर्वविप्रतिषेधेन' इति पूर्वविप्रतिषेधेन नुटि अनुबन्धलोपे 'वारि नाम्' इति जाते 'नामि' इति दीर्घे 'अट्कुप्वाङ्' इति णत्वे तत् सिद्धम् ।

**दध्ना** ( १९३०, ३७, ४३, ४८ ५०, ५२ )—दधिशब्दाट्टाविभक्तौ अनुबन्धलोपे 'दधि आ' इति स्थिते 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' इत्यनेन दधिशब्दस्यैकारस्याऽनङि अनुबन्धलोपे 'दधन् आ' इति स्थिते 'यचि भम्' इत्यनेन भसंज्ञायाम् 'अल्लोपोऽनः' इत्यनेन अनोऽकारस्य लोपे 'दध्ना' इति सिद्धम् ।

**दध्नि** ( १९४०, ४४, ४६ )—दधिशब्दात् सप्तम्येकवचने ङिविभक्तौ अनुबन्धलोपे 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' इत्यनेन दधिशब्दस्यैकारस्याऽनङि अनुबन्धलोपे 'विभाषा ङिश्योः' इत्यनेन अनोऽकारस्य लोपे 'दध्नि' इति । लोपाभावपक्षे 'दधनि' इति च भवति ।

**सुधिया**—'सुष्ठु ध्यायति' इति विग्रहे सुध्रीशब्दात्तृतीयैकवचने 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य' इति सूत्रेण सुध्यातृत्वस्य शोभनज्ञानवत्त्वस्य वा प्रवृत्तिनिमित्तस्य पुंसि नपुंसके च सत्त्वात् वैकल्पिकपुंवद्भावेन ह्रस्व-नुमोरभावे 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' इत्यनेन इयङि अनुबन्धलोपे 'सुधिया' इति । पुंवद्भावाऽभावपक्षे तु 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इत्यनेन ह्रस्वे 'इकोऽचि विभक्तौ' इति नुमि 'सुधिना' इति च सिद्धं भवति ।

**हे मधु** ( १९३८ )—मधुशब्दात् सम्बोधनैकवचने सौ विभक्तौ 'स्वमोर्नपुंसकात्' इति सोर्लुकि उक्तं रूपं सिद्धम् । 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति प्रत्ययलक्षणेन 'ह्रस्वस्य गुणः' इति गुणादेशस्तु न 'न लुमताङ्गस्य' इति प्रत्ययलक्षणनिषेधात् । 'न लुमताङ्गस्य' इत्यस्याऽनित्यत्वपक्षे तु प्रत्ययलक्षणेन सम्बुद्धिनिमित्तके गुणे सति 'हे मधो' इति च भवति ।

**प्रराभ्याम्** ( १९२८, ४६ )—प्रकृष्टः राः धनं यस्येति बहुव्रीहौ प्ररैशब्दस्य 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वे 'एच इग्घ्रस्वादेशे' इति एजूपस्यैकारस्य इकारे 'प्ररि' इति, तस्मात् भ्यामि विभक्तौ 'एकदेशविकृतन्यायेन 'रायो हलि' इत्यात्वे 'प्रराभ्याम्' इति सिद्धम् ।

इति सोत्तरायां प्रश्नावल्यामजन्तनपुंसकलिङ्गप्रकरणम् ।

# अथ हलन्तपुँल्लिङ्गप्रकरणम् ।

**लिट्त्सु** ( १९२०, ३५ )—लिह्शब्दात्सुपि विभक्तौ अनुबन्धलोपे 'लिह्सु' इति स्थिते 'हो ढः' इत्यनेन हस्य ढत्वे 'झलां जशोऽन्ते' इत्यनेन ढस्य जश्त्वेन डकारे 'लिड् सु' इति दशायां 'डः सि धुट्' इति डस्य धुटि अनुबन्धलोपे 'लिड् ध् सु' इति जाते 'खरि च' इत्यनेन धस्य चर्त्वेन तकारे पुनः 'खरि च' इति डस्य चर्त्वेन टकारे 'लिट्त्सु' इति । धुडभावपक्षे डकारस्य चर्त्वेन टकारे 'लिट्सु' इति ।

**विश्वौहः** ( १९२४,३२, ३९, ४२, ४५, ४७, ४९ )—विश्ववाह्शब्दाच्छशि विभक्तौ अनुबन्धलोपे 'यचि भम्' इत्यनेन भसंज्ञायां 'वाह ऊठ्' इत्यनेन इग्यणः सम्प्रसारणम्' इति बलात् वरूपस्य यणः स्थाने ऊकाररूपे सम्प्रसारणे कृते 'विश्व ऊ आह् अस्' इति स्थिते 'सम्प्रसारणाच्च' इति पूर्वरूपे 'विश्व ऊ अस्' इति जाते 'एत्येधत्यूठ्सु' इति पूर्वपरयोः स्थाने वृद्धौ सकारस्य रुत्वे विसर्गे 'विश्वौहः' इति सिद्धम् ।

**अनड्वान्** ( १९२५, ४१, ४८, ५१ )—अनडुह्शब्दात् प्रथमैकवचने 'चतुरनडुहोरामुदात्तः' इत्यनेन आमि अनुबन्धलोपे 'अनडु आह् सु' इति दशायाम् 'सावनडुहः' इत्यनेन नुमि अनुबन्धलोपे 'इको यणचि' इति यणि 'अनड्वाह्न्स्' इति दशायां हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्' इत्यादिना सलोपे 'संयोगान्तस्य लोपः' इत्यनेन हकारस्य लोपे 'अनड्वान्' इति सिद्धम् । अत्र सुलोपस्याऽसिद्धत्वान्नलोपो नेति बोध्यम् ।

**चतुर्ण्णाम्** ( १९३७, ३८, ५० )—चतुर्शब्दादामि विभक्तौ 'चतुर् आम्' इति स्थिते 'षट्चतुर्भ्यश्च' इति नुटि अनुबन्धलोपे 'रषाभ्यां नो णः समानपदे' इत्यनेन णत्वे 'अचोरहाभ्यां द्वे' इत्यनेन द्वित्वे 'चतुर्ण्णाम्' इति सिद्धम् । द्वित्वाभावे 'चतुर्णाम्' इति ।

**चतुर्षु** ( १९४४ )—चतुर्शब्दात् सुपि विभक्तौ 'चतुर् सु' इति स्थिते 'खरवसानयोर्विसर्जनीयः' इति रेफस्य विसर्गे प्राप्ते 'रोः सुपि' इति निषेधे 'आदेशप्रत्यययोः' इति सस्य षत्वे 'अचो रहाभ्यां द्वे' इति षस्य द्वित्वे प्राप्ते 'शरोऽचि' इति निषेधे 'चतुर्षु' इति सिद्धम् ।

**अयम्** ( १९५१ )—इदम्शब्दात् सौ विभक्तौ अनुबन्धलोपे 'इदम् स्' इत्यवस्थायां 'त्यदादीनामः' इत्यनेन अत्वे प्राप्ते तं प्रबाध्य 'इदमो मः' इत्यनेन

इदमो मस्य मत्वे 'इदोऽयपुंसि' इतीद्भागस्य अयादेशे 'हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्' इति सलोपे 'अयम्' इति सिद्धम् ।

आभ्याम् ( १९४४ )—इदम् शब्दात् भ्यामि विभक्तौ 'त्यदादीनामः' इत्यनेन अत्वे 'अतो गुणे' इति पररूपे 'इदभ्याम्' इति जाते 'हलि लोपः' इत्यनेन 'अलोन्त्यस्ये'ति परिभाषया अन्त्यस्य दकारस्य लोपे प्राप्ते 'नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे' इति परिभाषया अलोन्त्यविध्यभावे इद्भागस्यैव लोपे 'अ भ्याम्' इति स्थिते 'आद्यन्तवदेकस्मिन्' इत्येकस्मिन्नेवाऽकारे अन्तवद्भावेन अदन्तत्वं मत्वा 'सुपि चे'ति दीर्घे 'आभ्याम्' इति सिद्धम् ।

एभिः ( १९५२ )—इदम्शब्दात् भिसि अत्वे पररूपे 'इद भिस्' इति जाते 'अतो भिस ऐस्' इति भिसः ऐस् प्राप्ते 'नेदमदसोरकोः' इति निषेधे 'हलि लोपः' इत्यनेन इद्भागस्य लोपे 'बहुवचने झल्येत्' इत्येत्वे सस्य रुत्वे विसर्गे 'एभिः' इतिः ।

'इदम्' शब्दस्य त्रिषु लिङ्गेषु रूपाणि ( १९२७, ४५ )—

| पुँल्लिङ्गे— | | | स्त्रीलिङ्गे— | | |
|---|---|---|---|---|---|
| अयम् | इमौ | इमे | इयम् | इमे | इमाः |
| इमम् ( एनम् ) | इमौ ( एनौ ) | इमान् (एनान्) | इमाम् (एनाम्) | इमे (एने) | इमाः (एनाः) |
| अनेन ( एनेन ) | आभ्याम् | एभिः | अनया (एनया) | आभ्याम् | आभिः |
| अस्मै | आभ्याम् | एभ्यः | अस्यै | आभ्याम् | आभ्यः |
| अस्मात् | आभ्याम् | एभ्यः | अस्याः | आभ्याम् | आभ्यः |
| अस्य | अनयोः(एनयोः) | एषाम् | अस्याः | अनयोः(एनयोः) | आसाम् |
| अस्मिन् | अनयोः ,, | एषु | अस्याम् | अनयोः ,, | आसु |

नपुंसके—

| | | |
|---|---|---|
| इदम् | इमे | इमानि |
| इदम् ( एनत्-द् ) | इमे ( एने ) | इमानि ( एनानि ) |
| अनेन ( एनेन ) | आभ्याम् | एभिः |
| अस्मै | आभ्याम् | एभ्यः |
| अस्मात् | आभ्याम् | एभ्यः |
| अस्य | अनयोः ( एनयोः ) | एषाम् |
| अस्मिन् | अनयोः ,, | एषु |

'त्यदादेः सम्बोधनं नास्ति'

**राज्ञः** ( १९३३ )—'राजन्' शब्दाच्छसि विभक्तौ अनुबन्धलोपे 'राजन् अस्' इति स्थिते 'यचि भम्' इति भसंज्ञायाम् 'अल्लोपो नः' इति जकारोत्तरवर्त्यकारस्य लोपे 'स्तोः श्चुना श्चुः' इति नस्य श्चुत्वेन ञकारे सकारस्य रुत्वे विसर्गे 'राज्ञः' इति सिद्धम् ।

**राजभिः** ( १९३६ )— राजन् भिस्' इति स्थिते 'स्वादिष्वसर्वनामस्थाने' इति पदत्वात् 'नलोपः प्रातिपदिकान्तस्य' इति नलोपे कृते 'अतो भिस ऐस्' इति ऐस्त्वे कर्तव्ये 'नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति' इति सूत्रेण नलोपस्याऽसिद्धत्वात् ऐस्त्वाभावे सकारस्य रुत्वे विसर्गे 'राजभिः' इति सिद्धम् ।

'राजन्' शब्दस्य रूपाणि ( १९४१ )—

| | | |
|---|---|---|
| राजा | राजानौ | राजानः |
| राजानम् | राजानौ | राज्ञः |
| राज्ञा | राजभ्याम् | राजभिः |
| राज्ञे | राजभ्याम् | राजभ्यः |
| राज्ञः | राजभ्याम् | राजभ्यः |
| राज्ञः | राज्ञोः | राज्ञाम् |
| राज्ञि–राजनि | राज्ञोः | राजसु |
| हे राजन् | हे राजानौ | हे राजानः |

**यज्वनः** ( १९ २०, २२ )—'यज्वन्' शब्दाच्छसि विभक्तौ अनुबन्धलोपे 'यज्वन् अस्' इति स्थिते 'यचि भम्' इत्यनेन भसंज्ञायाम् 'अल्लोपो नः' इत्यल्लोपे प्राप्ते 'न संयोगाद्वमन्तात्' इति निषेधे सकारस्य रुत्वे विसर्गे 'यज्वनः' इति सिद्धम् ।

**वृत्रघ्नः** ( १९ २१, २५, ३९ )—'वृत्रहन्' शब्दाच्छसि अनुबन्धलोपे 'यचि भम्' इति भसंज्ञायाम् 'अल्लोपो नः' इत्यनोऽकारस्य लोपे 'वृत्रह्न् अस्' इति जाते 'हो हन्तेर्ञ्णिन्नेषु' इत्यनेन नकारे परे हकारस्य कुत्वेन घकारे सस्य रुत्वे विसर्गे 'वृत्रघ्नः' इति सिद्धम् ।

**मघवान्** ( १९ २८, २९ )—'मघवन्' शब्दात्सौ विभक्तौ मघवन् स' इति दशायां 'मघवा बहुलम्' इत्यनेन विभाषया 'तृ' इत्यन्तादेशे ऋकारस्येत्संज्ञायां लोपे च विहिते 'मघवत् स्' इति स्थिते 'उगिदचां सर्वनामस्थानेऽधातोः' इति नुमि अनुबन्धलोपे 'हल्ङ्याब्भ्यः' इति सलोपे 'संयोगान्तस्य लोपः' इति तलोपे 'मघवा

बहुलम्' इति सूत्रस्थबहुलग्रहणात् संयोगान्तलोपस्याऽसिद्धत्वाभावेन 'सर्वनामस्थाने चाऽसम्बुद्धौ' इत्यनेन नान्तस्योपधायाः दीर्घे च कृते 'मघवान्' इति सिद्धम्। तृत्वाऽभावे तु सुलोपे, नान्तस्योपधाया दीर्घे नलोपे 'मघवा' इति।

**मघोनः**—(१९ २०, ४३, ४८)—'मघवन्' शब्दाच्छसि 'मघवन् अस्' इति स्थिते 'यचि भम्' इति भसंज्ञायाम् 'श्वयुवमघोनामतद्धिते' इति सम्प्रसारणे 'सम्प्रसारणाच्च' इति पूर्वरूपे 'आद्गुणः' इति गुणे सकारस्य रुत्वे विसर्गे 'मघोनः' इति तृत्वाऽभावे रूपं सिद्धम्।

**'मघवन्' शब्दस्य रूपाणि (१९ ४०, ४६)—**

| तृज्वद्भावपक्षे— | | | तृज्वद्भावाऽभावपक्षे— | | |
|---|---|---|---|---|---|
| मघवान् | मघवन्तौ | मघवन्तः | मघवा | मघवानौ | मघवानः |
| मघवन्तम् | ,, | मघवतः | मघवानम् | ,, | मघोनः |
| मघवता | मघवद्भ्यां | मघवद्भिः | मघोना | मघवभ्यां | मघवभिः |
| मघवते | ,, | मघवद्भ्यः | मघोने | ,, | मघवभ्यः |
| मघवतः | ,, | ,, | मघोनः | ,, | ,, |
| ,, | मघवतोः | मघवताम् | ,, | मघोनोः | मघोनाम् |
| मघवति | ,, | मघवत्सु | मघोनि | ,, | मघवसु |
| हे मघवन् | मघवन्तौ | मघवन्तः | हे मघवन् | मघवानौ | मघवानः |

**यूनः** (१९ ४१, ४६)—'युवन्' शब्दाच्छसि 'युवन् अस्' इति स्थिते 'यचि भम्' इति भसंज्ञायां 'श्वयुवमघोनामतद्धिते' इति वकारस्य सम्प्रसारणे 'सम्प्रसारणाच्च' इति पूर्वरूपे 'यु उन् अस्' इति दशायां यकारस्याऽपि 'श्वयुवमघोनामतद्धिते' इति सम्प्रसारणे प्राप्त 'न सम्प्रसारणे सम्प्रसारणम्' इति निषेधे सवर्णदीर्घे सकारस्य रुत्वे विसर्गे 'यूनः' इति सिद्धम्।

**पन्थाः** (१६ ३३, ४३)—'पथिन्' शब्दात्सौ 'पथिन् स्' इति दशायां 'पथिमथ्यृभुक्षामात्' इत्यात्वे 'पथि आ स्' इति स्थिते 'इतोत्सर्वनामस्थाने' इति थकारोत्तरवर्तीकारस्याकारे 'थो न्थः' इत्यनेन थकारस्य न्थादेशे 'अकः सवर्णे दीर्घः' इति सवर्णदीर्घे सकारस्य रुत्वे विसर्गे 'पन्थाः' इति सिद्धम्।

**अष्टौ** (१९२२, २९, ३०, ४३, ५२)—'अष्टन्' शब्दात् जसि शसि च

विभक्तौ अनुबन्धलोपे 'अष्टन् अस्' इति स्थिते 'अष्टन आ विभक्तौ' इत्यनेन अष्टनो नकारस्य आत्वे 'अष्ट आ अस्' इति स्थिते सवर्णदीर्घे 'अष्टाभ्य औश्' इत्यनेन औशि अनुबन्धलोपे 'वृद्धिरेचि' इति वृद्धौ 'अष्टौ' इति सिद्धम्। ननु हलादावात्वस्य विधानेन कथमत्र अजादावात्वमिति चेन्न, एकमात्रालाघवेन 'अष्टभ्य औश्' इति वक्तव्ये 'अष्टाभ्य' इति दीर्घोच्चारणं क्वचिदजादावपि 'अष्टन आ विभक्तौ' इति सूत्रविहितमात्वं भवतीति ज्ञापनेनादोषात्।

**अष्टानाम्** (१९२१)—'अष्टन्' शब्दात् षष्ठीबहुवचने 'ष्णान्ता षट्' इत्यनेन षट्संज्ञायां 'षट्चतुर्भ्यश्च' इति नुटि अनुबन्धलोपे 'अष्टन् नाम्' इति स्थिते 'अष्टन आ विभक्तौ' इत्यनेन पाक्षिके आत्वे 'अष्ट आ नाम्' इति दशायाम् 'अकः सवर्णे दीर्घः' इति दीर्घे 'अष्टानाम्' इति। आत्वाऽभावेऽपि 'अष्टानाम्' इति। तद्धि—षट्-संज्ञायां सत्यां नुटि अनुबन्धलोपे 'नोपधायाः' इति दीर्घे 'नलोपः प्रातिपदिकान्तस्य' इति नलोपे 'अष्टानाम्' इति भवति।

**ऋत्विक्**—ऋतावुपपदे 'युज्' धातोः 'ऋत्विग्दधृक्' इत्यादिना क्विनि 'लशक्व-तद्धिते' इत्यनेन ककारस्य 'हलन्त्यम्' इत्यनेन नकारस्य च इत्संज्ञायां लोपे च कृते इकारस्योच्चारणार्थत्वेन तस्मिन् गते क्विनो वकारस्य 'अपृक्त एकाल्प्रत्ययः' इत्यपृक्तसंज्ञायां 'वेरपृक्तस्य' इत्यपृक्तसंज्ञकस्य वस्य च लोपे विहिते क्विनः सर्वाऽपहारे 'वचिस्वपियजादीनां किति' इति सम्प्रसारणे 'सम्प्रसारणाच्च' इति पूर्वरूपे 'ऋतु इज्' इति स्थिते 'इको यणचि' इति यणि 'ऋत्विज्' इति स्थिते 'कृदतिङ्' इति सूत्रेण कृत्संज्ञायां 'कृत्तद्धितसमासाश्च' इति कृदन्तत्वात् प्रातिपदिकसंज्ञायां सौ अनुबन्धलोपे 'ऋत्विज् स्' इति स्थिते हल्ङ्याादिना सलोपे 'क्विन्प्रत्ययस्य कुः' इत्यनेन जकारस्य कुत्वेन गकारे 'वाऽवसाने' इति तस्य चर्त्वेन ककारे 'ऋत्विक्' इति। चर्त्वाऽभावपक्षे 'ऋत्विग्' इति।

**युङ्** (१९२३)—'युजिर् योगे' अस्माद्धातोः 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च' इत्यनेन क्विनि 'लशक्वतद्धिते' इति ककारस्य, 'हलन्त्यम्' इति नकारस्य, 'अपृक्त एकाल् प्रत्ययः' इत्यनेन अपृक्तसंज्ञायां सत्यां 'वेरपृक्तस्य' इत्यनेन वकारस्य च इत्संज्ञायां लोपे च विहिते इकारस्योच्चारणार्थत्वेन तस्मिन्नपि गते प्रत्ययलक्षणेन 'कृदतिङ्' इति कृत्संज्ञायां 'कृत्तद्धितसमासाश्चे'ति कृदन्तत्वात् प्रातिपदिकसंज्ञायां सौ अनुबन्धलोपे 'युजेरसमासे' इति नुमि अनुबन्धलोपे हल्ङ्या-

दिना सलोपे 'संयोगान्तस्य लोपः' इति जलोपे 'क्विन्प्रत्ययस्य कुः' इति नस्य कुत्वेन ङकारे 'युङ्' इति सिद्धम्।

**विश्वाराट्**—विश्वोपपदात् राज्धातोः 'सत्सुद्विष' इत्यादिसूत्रेण क्विपि क्विपः सर्वापहारे 'विश्वराज' इति, तस्मात् कृदन्तत्वात् प्रातिपदिकसंज्ञायां सौ अनुबन्धलोपे 'विश्वराज स्' इति दशायां 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' इत्यनेन जकारस्य षत्वे 'झलां जशोऽन्ते' इत्यनेन षकारस्य जश्त्वेन डकारे 'वाऽवसाने' इति डस्य चर्त्वे 'विश्वस्य वसुराटोः' इति विश्वशब्दस्य दीर्घे हल्ङ्यादिना सलोपे 'विश्वाराट्' इति। चर्त्वाऽभावपक्षे 'विश्वाराड्' इति।

**आवाम्** ( १९२२ ) अस्मच्छब्दात् प्रथमाद्विवचने 'अस्मद् औ' इति स्थिते 'ङे प्रथमयोरम्' इत्यनेन औकारस्य स्थाने अमि 'युवावौ द्विवचने' इति अस्मदो मपर्यन्तस्य आवादेशे 'आव अद् अम्' इति स्थिते 'अतो गुणे' इति पररूपे 'आवद् अम्' इति दशायां 'प्रथमायाश्च द्विवचने भाषायाम्' इत्यनेन दकारस्यात्वे 'आव आ अम्' इति जाते 'अकः सवर्णे दीर्घः' इति सवर्णदीर्घे 'आवा अम्' इति स्थिते 'अमि पूर्वः' इति पूर्वरूपे 'आवाम्' इति सिद्धम्।

**युष्मान्**—युष्मच्छब्दाच्छसि 'युष्मद् अस्' इति स्थिते 'शसो न' इत्यनेन 'आदेः परस्य' इति सहकाराच्छसोऽकारस्य नादेशे 'संयोगान्तस्य' इति सलोपे 'द्वितीयायां च' इत्यनेन अन्त्यस्य द्मात्रस्य आकारे सवर्णदीर्घे 'युष्मान्' इति।

**त्वया** ( १९२५, ४०, ५० )—युष्मच्छब्दात्तृतीयैकवचने 'युष्मद् आ' इति स्थिते 'त्वमावेकवचने' इति मपर्यन्तस्य युष्मच्छब्दस्य त्वादेशे 'त्व अद् आ' इति स्थिते 'अतो गुणे' इति पररूपे 'त्वद् आ' इति भूते 'योऽचि' इत्यनेन दकारस्य यकारे 'त्वया' इति सिद्धम्।

**युष्मभ्यम्** ( १९२४, ३६, ४३ )—युष्मच्छब्दाद्भ्यसि 'युष्मद् भ्यस्' इति स्थिते 'भ्यसो भ्यम्' इति भ्यसो भ्यमादेशे 'शेषे लोपः' इत्यनेन अन्त्यस्य दस्य लोपे 'युष्मभ्यम्' इति। 'भ्यसो भ्यम्' इत्यत्र 'भ्यसोऽभ्यम्' इति छेदे तु अन्त्यलोपपक्षे 'अतो गुणे' इति पररूपेण 'युष्मभ्यम्' इति निष्पन्नं बोध्यम्।

**युष्माकम्** ( १९२१, ३१, ३२, ३७, ४३ )—युष्मच्छब्दात् षष्ठीबहुवचने 'युष्मद् आम्' इति स्थिते 'साम आकम्' इति आमि साम्त्वारोपेण आकमादेशे

'युष्मद् आकम्' इति दशायां 'शेषे लोपः' इति दलोपे 'अकः सवर्णे दीर्घः' इति सवर्णदीर्घे युष्माकम्' इति सिद्धम् ।

त्वयि ( १९३५ )—युष्मच्छब्दात्सप्तम्येकवचने 'युष्मद् इ' इति दशायां 'त्वमावेकवचने' इति युष्मदो मपर्यन्तस्य त्वादेशे 'अतो गुणे' इति पररूपे 'त्वद् इ' इति जाते 'योऽचि' इत्यनेन दकारस्य यकारादेशे 'त्वयि' इति सिद्धम् ।

श्रीशस्त्वावतु०—इह = संसारे, श्रीशः = नारायणः, त्वा = त्वाम्, मा=माम्, अपि = च, अवतु = पातु । स हरिः = पूर्वोक्तः नारायणः, ते = तुभ्यम् , मे = मह्यम् , अपि = च, शर्म = सुखम् , दत्तात् = ददातु। स हरिः=पूर्वोक्तः नारायणः, ते = तव, मे = मम, अपि = च, स्वामी = प्रभुः, अस्तीति शेषः । (सः) विभुः = व्यापको नारायणः, वाम् = युवाम् , नौ = आवाम् , पातु = रक्षतु । (सः) ईशः=प्रभुः, वाम्= युवाभ्याम् , नौ = आवाभ्याम् , सुखं = कल्याणम्, ददातु = दत्तात् । (सः) हरिः = नारायणः, वां = युवयोः, नौ = आवयोः, पतिः = प्रभु , अस्तीति शेषः । सः = हरिः, व = युष्मान् , नः = अस्मान् , अव्यात् = रक्षेत् । सः = हरिः, वः = युष्मभ्यम्, नः = अस्मभ्यम् . शिवं = कल्याणं, दद्यात् । अत्र = इह लोके, सः = हरिः, वः = युष्माकम् , नः = अस्माकम् , सेव्यः = आराध्यः, अस्तीति शेषः ।

प्राचः ( १९३५ )—प्रपूर्वात् 'अञ्चु' धातोः 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च' इति सूत्रेण क्विनि 'लशक्वतद्धिते' इति क्विनः ककारस्य 'हलन्त्यम्' इति नकारस्य च इत्संज्ञायां लोपे च कृते इकारस्योच्चारणार्थत्वेन तस्मिन् गते 'वेरपृक्तस्य' इति वकारस्याऽपि लोपे कृते क्विनः सर्वापहारे 'प्र अञ्च्' इति स्थिते 'अनिदितां हल उपधायाः क्ङिति' इत्युपधानकारलोपे 'कृदतिङ्' इति क्विनः कृत्संज्ञकत्वात् 'प्र अच्' इत्यस्य 'कृत्तद्धितसमासाश्च' इति कृदन्तत्वात् प्रातिपदिकसंज्ञायां शसि अनुबन्धलोपे 'प्र अच् अस्' इति स्थिते 'यचि भम्' इति भसंज्ञायाम् 'अचः' इत्यनेनाकारस्य लोपे 'चौ' इति दीर्घे सकारस्य रुत्वे विसर्गे 'प्राचः' इति सिद्धम् ।

प्रतीचः ( १९४६ )—प्रतिपूर्वाद् 'अञ्चु' धातोः 'ऋत्विगि'त्यादिना क्विनि 'लशक्वतद्धिते' इति क्विनः ककारस्य 'हलन्त्यम्' इति नकारस्य चेत्संज्ञायां लोपे च कृते इकारस्योच्चारणार्थत्वेन तस्मिन् गते 'वेरपृक्तस्य' इति वकारस्यापि लोपे क्विनः सर्वापहारे जाते 'अनिदितां हल उपधायाः क्ङिति' इत्यञ्चेरुपधानकारस्य लोपे 'कृदतिङ्' इति क्विनः कृत्संज्ञकत्वात् 'प्रति अच्' इत्यस्य 'कृत्तद्धिते'ति प्रातिपदिक-

संज्ञायां शसि अनुबन्धलोपे 'प्रति अच् अस्' इति स्थिते 'यचि भम्' इति भसंज्ञायाम् 'अचः' इत्यलोपे 'चौ' इति दीर्घे सकारस्य रुत्वे विसर्गे 'प्रतीचः' इति सिद्धम् ।

**उदीचः** ( १९२१, ४३ )—उत्पूर्वाद् 'अञ्चु' धातोः 'ऋत्विगि' त्यादिना क्विनि 'लशक्वतद्धिते' इति क्विनः ककारस्य 'हलन्त्यम्' इति नकारस्य चेत्संज्ञायां लोपे च कृते इकारस्योारणचार्थत्वात् तस्मिन् गते 'वेरपृक्तस्य' इति वकारस्यापि लोपे कृते क्विनः सर्वापहारे भूते 'अनिदितामि'त्युपधानकारस्य लोपे 'कृदतिङ्' इति क्विनः कृत्संज्ञकत्वात् 'उत् अच्' इत्यस्य 'कृत्तद्धिते'ति प्रातिपदिकसंज्ञायां शसि अनुबन्धलोपे 'उत् अच् अस्' इति स्थिते तकारस्य जश्त्वेन दकारे 'यचि भम्' इति भसंज्ञायां 'अचः' इत्यल्लोपं प्रबाध्य 'उद ईत्' अचोऽकारस्य ईत्वे सस्य रुत्वे विसर्गे 'उदीचः' इति ।

**समीचः** ( १९३६ )—सम् पूर्वाद् 'अञ्चु' धातोः 'ऋत्विगि'त्यादिना क्विनि 'लशक्वतद्धिते' इति क्विनः ककारस्य 'हलन्त्यम्' इति नकारस्य चेत्संज्ञायां लोपे च कृते इकारस्योच्चारणार्थत्वात् तस्मिन् गते 'वेरपृक्तस्य' इति वकारस्यापि लोपे कृते क्विनः सर्वापहारे जाते 'अनिदितां हल उपधायाः क्ङिति' इत्युपधानकारस्य लोपे 'कृद-तिङ्' इति क्विनः कृत्संज्ञकत्वात् 'सम् अच्' इत्यस्य 'कृत्तद्धिते'ति प्रातिपदिकसंज्ञायां शसि अनुबन्धलोपे 'सम् अच् अस्' इति दशायां 'समः समि' इति समः सम्यादेशे 'समि अच् अस्' इति स्थिते 'यचि भम्' इति भसंज्ञायाम् 'अचः' इत्य-ल्लोपे 'चौ' इति दीर्घे सस्य रुत्वे विसर्गे 'समीचः' इति सिद्धम् ।

**तिरश्चः**—तिरस्पूर्वाद् 'अञ्चु' धातोः 'ऋत्विगि' त्यादिना क्विनि क्विनः सर्वाप-हारे 'अनिदितामि'ति नलोपे 'कृदतिङ्' इति क्विनः कृत्संज्ञकत्वात् 'तिरस् अच्' इत्यस्य 'कृत्तद्धिते'ति प्रातिपदिकसंज्ञायां शसि अनुबन्धलोपे 'तिरस् अच् अस्' इति स्थिते भसंज्ञायाम् 'अचः' इत्यनेन अल्लोपे 'तिरसस्तिर्यलोपे' इत्यस्य अप्राप्तया 'स्तोः श्चुना श्चुः' इति सस्य श्चुत्वेन शकारे सस्य रुत्वे विसर्गे 'तिरश्चः' इति ।

**तादृक्** ( १९४४,४५ )—तदुपपदाद्दृश्धातोः 'त्यदादिषु दृशोऽनालोचने कञ्च' इति सूत्रेण चकारात् क्विनि क्विनः ककारस्य 'लशक्वतद्धिते' इत्यनेन नकारस्य 'हलन्त्यम्' इत्यनेन च इत्संज्ञायां लोपे च कृते इकारस्योच्चारणार्थत्वात्तस्मिन् गते वेरपृ-क्तस्य' इत्यनेन वकारस्य च लोपे कृते क्विनः सर्वापहारे भूते 'आसर्वनाम्नः' इति तच्छब्दस्याकारान्तादेशे सवर्णदीर्घे 'तादृश्' इत्यवस्थायां 'कृदतिङ्' इति क्विनः कृत्सं-ज्ञकत्वात् 'तादृश्' इत्यस्य 'कृत्तद्धिते'ति प्रातिपदिकसंज्ञायां सौ हल्ङ्यादिना सुलोपे

'क्विन्प्रत्ययस्य कुः' इत्यसिद्धत्वात् 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' इति षत्वे 'झलां जशोऽन्ते' इति षस्य जश्त्वे डकारे 'क्विन्प्रत्ययस्य कुः' इति डस्य कुत्वेन गकारे 'वावसाने' इति चर्त्वेन ककारे 'तादृक्' इति। चर्त्वाभावे 'तादृग्' इति।

**षण्णाम्** (१९३१)—षष्शब्दात् आमि 'षट्चतुर्भ्यश्च' इति नुटि अनुबन्धलोपे 'षष् नाम्' इति स्थिते 'झलां जशोऽन्ते' इति षस्य जश्त्वेन डकारे 'ष्टुना ष्टुः' इति नस्य ष्टुत्वेन णकारे 'प्रत्यये भाषायां नित्यम्' इत्यनेन डकारस्य च णत्वे 'षण्णाम्' इति। 'अत्र 'न पदान्ताट्टोरनाम्' इति ष्टुत्वनिषेधस्तु न 'अनाम्नवतिनगरीणामिति वाच्यम्' इति वार्तिकेन तन्निषेधात्।

**षट्त्सु** (१९३४) षष् शब्दात् सप्तमीबहुवचने सुप्यनुबन्धलोपे 'षष् सु' इति दशायां 'स्वादिष्विति' पदत्वात् 'झलां जशोऽन्ते' इति षस्य जश्त्वेन डकारे 'डः सि धुट्' इति डकारात्परस्य सस्य धुटि अनुबन्धलोपे 'षड् ध् सु' इति दशायाम् 'खरि च' इत्यनेन धकारस्य चर्त्वेन तकारे पुनः डकारस्याऽपि तेनैव चर्त्वेन टकारे 'षट्त्सु' इति। धुडभावपक्षे 'षट्सु' इति।

**पिपठीष्षु** (१९३४)—पिपठिष् शब्दात् सप्तमीबहुवचने सुपि अनुबन्धलोपे 'पिपठिष् सु' इति दशायां 'स्वादिष्वसर्वनामस्थाने' इति पदसंज्ञायां सत्यां षत्वस्यासिद्धत्वात् 'ससजुषो रुः' इति रुत्वे अनुबन्धलोपे पिपठिर् सु' इति स्थिते 'र्वोरुपधाया दीर्घ इकः' इति दीर्घे 'खरवसानयोर्विसर्जनीयः' इति रेफस्य विसर्गे 'पिपठीः सु' इति जाते सत्वं बाधित्वा 'वा शरि' इति विसर्गस्य स्थाने पाक्षिके विसर्गे 'नुम्विसर्जनीयशर्व्यवायेऽपि' इति सस्य षत्वे 'पिपठीःषु' इति। 'वा शरि' इति विकल्पपक्षे 'पिपठीः सु' इति दशायां 'विसर्जनीयस्य सः' इति विसर्गस्य सत्वे 'नुम्विसर्जनीयशर्व्यवायेऽपि' इति सुपः सकारस्य षत्वे 'पिपठीस् षु' इति स्थिते 'ष्टुना ष्टुः' इति सकारस्य ष्टुत्वेन षकारे 'पिपठीष्षु' इति सिद्धं भवति।

**विद्वान्** (१९२१, ४३)—'विद्' धातोः लटः शतरि 'विदेः शतुर्वसुः' इति शतृस्थाने वस्वादेशे अनुबन्धलोपे 'विद्वस्' इति। तस्य कृदन्तत्वात् प्रातिपदिकसंज्ञायां सौ अनुबन्धलोपे 'उगिदचां सर्वनामस्थानेऽधातोः' इति नुमि उमि गते 'विद्वन्स् स्' इति जाते 'सान्तमहतः संयोगस्य' इति दीर्घे 'विद्वान्स् स्' इति स्थिते 'हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्' इति विभक्तिसकारस्य लोपे 'संयोगान्तस्य-

लोपः' इत्यनेन सलोपे 'विद्वान्' इति सिद्धम् । अत्र नलोपस्तु न, संयोगान्तलोपस्याऽसिद्धत्वात् ।

**विदुषः** ( १९२०, ४२, ५० )—'विद्वस्' शब्दाच्छसि अनुबन्धलोपे 'विद्वस् अस्' इति स्थिते 'यचि भम्' इति भसंज्ञायाम् 'वसोः सम्प्रसारणम्' इति वस्य सम्प्रसारणे 'सम्प्रसारणाच्च' इति पूर्वरूपे 'आदेशप्रत्यययोः' इति षत्वे विभक्तेः सकारस्य रुत्वे विसर्गे 'विदुषः' इति ।

**पुमान्** ( १९४१, ४३ )—'पुंस्' शब्दात् सौ अनुबन्धलोपे 'पुंसोऽसुङ्' इत्यसुङि अनुबन्धलोपे 'पुमस् सु' इति स्थिते 'उगिदचां सर्वनामस्थानेऽधातोः' इति नुमि उमि गते 'पुमन्स् स्' इति दशायां 'सान्तमहतः संयोगस्य' इति उपधादीर्घे हल्ङ्यादिना विभक्तेः सकारस्य लोपे 'संयोगान्तस्य लोपः' इति सलोपे 'पुमान्' इति।

**पुम्भ्याम्** ( १९३५ )—'पुंस्' शब्दात् भ्यामि 'पुंस् भ्याम्' इति स्थिते स्वादिष्विति पदत्वात् 'संयोगान्तस्य लोपः' इति सलोपे 'निमित्ताऽपाये नैमित्तिकस्याप्यपायः' इत्यनुस्वारस्यापि निवृत्तौ 'पुम्भ्याम्' इति भूते मकारस्य पुनः अनुस्वारे परसवर्णे 'पुम्भ्याम्' इति ।

**हे उसनन्** ( १९४५ )— उसनस्' शब्दात् सम्बोधनैकवचने 'उसनस् सु' इति दशायां 'हल्ङ्याब्भ्यः-' इति सोर्लोपे 'अस्य सम्बुद्धौ वाऽनङ् नलोपश्च वा वाच्यः' इति वार्तिकेन अनङि नलोपे च कृते 'हे उसन' इति । वाग्रहणान्नलोपाभावे सोर्लोपे अनङि 'हे उसनन्' इति। अनङ्भावे सोर्लोपे सकारस्य रुत्वे विसर्गे हे उसनः' इति रूपत्रयं भवति ।

**अमी** ( १९२२ )—'अदस्' शब्दाज्जसि 'त्यदादीनामः' इत्यत्वे 'अतो गुणे' इति पररूपे 'जसः शी' इति जसः श्यादेशे अनुबन्धलोपे 'अद ई' इति जाते 'आद्गुणः' इति गुणे 'एत ईद्बहुवचने' इति एकारस्य ईकारे दस्य मत्वे च कृते 'अमी' इति सिद्धम् ।

**अमुना** ( १९४७, ४९ )—'अदस्' शब्दात्तृतीयैकवचने त्यदाद्यत्वे पररूपे च कृते 'अदसोऽसेर्दादु दो मः' इति अकारस्य उत्वे दस्य च मत्वे 'अमु आ' इति जाते नाभावे कर्तव्ये 'न मुने' इत्यनेन मुत्वस्याऽसिद्धत्वाभावबोधनात् 'शेषो घ्यसखि' इति घिसंज्ञायाम् 'आङो नाऽस्त्रियाम्' इति 'आ' इत्यस्य नादेशे 'अमुना' इति सिद्धम् ।

नवाऽत्र मुत्वस्याऽसिद्धत्वात् 'सुपिचे'ति दीर्घः कुतो नेति वाच्यम्, 'न मुने' इत्यनेन कृते च नाभावे मुत्वस्य नासिद्धत्वमित्यर्थस्यापि बोधनात् ।

**अमीभिः** ( १९३८ )—'अदस्' शब्दाद्भिसि त्यदाद्यत्वे पररूपत्वे च कृते 'अद भिस्' इति जाते 'अतो भिस ऐस्' इति भिसः स्थाने ऐसादेशे प्राप्ते 'नेदमदसोरकोः' इति निषेधे 'बहुवचने झल्येत्' इत्येत्वे 'अदे भिस्' इति स्थिते 'एत ईद्बहुवचने' इति एकारस्य ईत्वे दस्य मत्वे च कृते सकारस्य रुत्वे विसर्गे 'अमीभिः' इति सिद्धम् ।

**अमीषाम्** ( १९३१ )—'अदस्' शब्दात् आमि त्यदाद्यत्वे पररूपत्वे च कृते 'आमि सर्वनाम्नः सुट्' इति सुटि अनुबन्धलोपे 'अदस् आम्' इति जाते 'बहुवचने झल्येत्' इत्येत्वे 'अदेसाम्' इति स्थिते 'आदेशप्रत्यययोः' इति षत्वे 'एत ईद्बहुवचने' इत्येकारस्य ईत्वे दस्य च मत्वे 'अमीषाम्' इति सिद्धम् ।

**अमीषु** ( १९३४ )—'अदस्' शब्दात्सुपि त्यदाद्यत्वे पररूपत्वे च कृते 'अद सु' इति स्थिते 'बहुवचने झल्येत्' इत्येत्वे 'अदे सु' इति भूते 'एत ईद्बहुवचने' इति एकारस्य ईकारे दस्य मत्वे च कृते 'आदेशप्रत्यययोः' इति षत्वे 'अमीषु' इति ।

**'अदस्' शब्दस्य त्रिषु लिङ्गेषु रूपाणि ( १६४८ )—**

| पुँल्लिङ्गे— | | | स्त्रीलिङ्गे— | | |
|---|---|---|---|---|---|
| असौ | अमू | अमी | असौ | अमू | अमूः |
| अमुम् | अमू | अमून् | अमुम् | अमू | अमूः |
| अमुना | अमूभ्याम् | अमीभिः | अमुया | अमूभ्याम् | अमूभिः |
| अमुष्मै | अमूभ्याम् | अमीभ्यः | अमुष्यै | अमूभ्याम् | अमूभ्यः |
| अमुष्मात् | अमूभ्याम् | अमीभ्यः | अमुष्याः | अमूभ्याम् | अमूभ्यः |
| अमुष्य | अमुयोः | अमीषाम् | अमुष्याः | अमुयोः | अमूषाम् |
| अमुष्मिन् | अमुयोः | अमीषु | अमुष्याम् | अमुयोः | अमीषु |

नपुंसके—अदः, अमू, अमूनि । अदः, अमू, अमूनि । शेषं पुंवत् ।

( त्यदादेः सम्बोधनं नास्ति )

इति सोत्तरायां प्रश्नावल्यां हलन्तपुँल्लिङ्गप्रकरणम् ।

# अथ हलन्तस्त्रीलिङ्गप्रकरणम् ।

**उपानत्** ( १९२१, ४८, ५० )—उपनह्यते इति विग्रहे उपपूर्वात् 'णह बन्धने' इत्यस्मात् 'णो नः' इति नत्वे ततः सम्पदादित्वात् कर्मणि क्विपि क्विपः सर्वापहारे 'नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ' इति पूर्वपदस्य दीर्घे 'कृदतिङ्' इति क्विपः कृत्संज्ञकत्वात् क्विबन्तात् 'उपानह्' शब्दात् 'कृत्तद्धिते'ति प्रातिपदिकसंज्ञायां सौ अनुबन्धलोपे 'उपानह् स्' इति दशायां 'हल्ङ्याब्भ्यः' इति सलोपे 'नहो धः' इति हस्य धत्वे 'झलां जशोऽन्ते' इति धकारस्य दत्वे 'वावसाने' इति चर्त्वे 'उपानत्' इति । चर्त्वाऽभावे 'उपानद्' इति ।

**चतस्रः**—( १९४३ )—चतसृशब्दाज्जसि 'चतसृ अस्' इति स्थिते 'त्रिचतुरोः स्त्रियां तिसृचतसृ' इति 'चतसृ' आदेशे 'अचि र ऋतः' इति ऋकारस्य रेफादेशे सकारस्य रुत्वे विसर्गे 'चतस्रः' इति ।

**चतसृणाम्** ( १९२३, ४४ )—'चतुर्' शब्दात् आमि 'त्रिचतुरोः स्त्रियां तिसृचतसृ' इति 'चतसृ' आदेशे 'चतसृ आम्' इति दशायाम् 'अचि र ऋतः' इति रेफादेशे प्राप्ते 'नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन' इति पूर्वविप्रतिषेधेन तं बाधित्वा 'ह्रस्वनद्यापो नुट्' इति नुटि अनुबन्धलोपे 'नामि' इति दीर्घे प्राप्ते 'न तिसृचतसृ' इति निषेधे 'ऋवर्णान्नस्य णत्वं वाच्यम्' इति णत्वे उक्तं रूपं सिद्धम् ।

**'चतुर्' शब्दस्य त्रिषु लिंगेषु रूपाणि** ( १९२७, ४७ )—

| पुँल्लिङ्गे— | स्त्रीलिङ्गे— | नपुंसके— |
|---|---|---|
| चत्वारः | चतस्रः | चत्वारि |
| चतुरः | चतस्रः | चत्वारि |
| चतुर्भिः | चतसृभिः | चतुर्भिः |
| चतुर्भ्यः | चतसृभ्यः | चतुर्भ्यः |
| चतुर्भ्यः | चतसृभ्यः | चतुर्भ्यः |
| चतुर्णाम् | चतसृणाम् | चतुर्णाम् |
| चतुर्षु | चतसृषु | चतुर्षु |
| हे चत्वारः | हे चतस्रः | हे चत्वारि |

( चतुर्–शब्दो नित्यं बहुवचनान्तः । )

**अनया** ( १९३८ )—'इदम्' शब्दाट्टाविभक्तौ त्यदाद्यत्वे पररूपत्वे टापि अनुबन्धलोपे सवर्णदीर्घे 'इदा आ' इति जाते 'अनाप्यकः' इति इद्भागस्य अनादेशे 'आङि चापः' इति आबन्तस्यैकारे 'एचोऽयवायावः' इति अयादेशे 'अनया इति ।

**अस्याः**-'इदम्' शब्दान्ङसि त्यदाद्यते पररूपत्वे टापि अनुबन्धलोपे सवर्णदीर्घे 'इदा अस्' इति स्थिते 'सर्वनाम्नः स्याड्ढ्रस्वश्च' इति स्याटि आपो ह्रस्वे च कृते अनुबन्धलोपे 'इद स्या अस्' इति जाते सवर्णदीर्घे कृते 'हलि लोपः' इतीद्भागस्य लोपे सस्य रुत्वे विसर्गे 'अस्याः' इति ।

**अद्भिः** ( २९२८, ४२ )—'अप्' शब्दात् भिस् विभक्तौ 'अपो भि' इति पस्य तकारे 'झलां जशोन्ते' इति जश्त्वे सकारस्य रुत्वे विसर्गे च 'अद्भिः' इति ।

**अद्भ्यः** ( १९५१ )—अप्शब्दाद्भ्यसि 'अपो भि' इति पकारस्य तकारे तस्य जश्त्वे सस्य रुत्वे विसर्गे 'अद्भ्यः' इति ।

**दृक्** (१९३६)—'दृश्' शब्दात् सौ विभक्तौ हल्ङ्यादिना सलोपे 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' इत्यनेन शस्य षत्वे तस्य 'झलां जशोऽन्ते' इति जश्त्वेन डकारे कृते 'त्यदादिषु दृशोऽनालोचने कञ्च' इति दृशेः क्विनो विधानादत्र क्विनोऽभावेऽपि 'क्विन्प्रत्ययस्य कुः' इति डकारस्य कुत्वेन गकारे तस्य 'वाऽवसाने' इति चर्त्वेन ककारे 'दृक्' इति । पक्षे 'दृग्' इति ज्ञेयम् ।

**अमुया** ( १९४० )—'अदस्' शब्दाट्टाविभक्तौ अत्वे पररूपत्वे च कृते टापि सवर्णदीर्घे 'अदा आ' इति स्थिते 'आङि चापः' इत्येत्वे अयादेशे 'अदया' इति जाते 'अदसोसेर्दादुदो मः' इति दात्परस्योत्वे दस्य च मत्वे 'अमुया' इति सिद्धम् ।

**अमुष्यै** ( १९२४, ३७, ४६, ४९ )—'अदस्' शब्दाच्चतुर्थ्येकवचने अत्वे पररूपत्वे टापि सवर्णदीर्घे च कृते 'अदा ए' इति स्थिते 'सर्वनाम्नः स्याड्ढ्रस्वश्च' इति ङः स्याडागमे आबन्ताङ्गस्य ह्रस्वे च कृते 'वृद्धिरेचि' इति वृद्धौ 'अदसोसेर्दादुदो मः' इत्युत्वे च कृते मत्वे 'आदेशप्रत्यययोः' इति षत्वे 'अमुष्यै' इति सिद्धम् ।

**अमूषाम्** ( १९४५ )—अदस् शब्दादामि अत्वे पररूपत्वे टापि सवर्णदीर्घे च कृते 'अदा आम्' इति स्थिते 'आमि सर्वनाम्नः सुट्' इति सुटि अनुबन्धलोपे 'अदसोसेर्दादुदो मः' इति ऊत्वे मत्वे च कृते सस्य षत्वे 'अमूषाम्' इति जातम् ।

इति सोत्तरायां प्रश्नावल्यां हलन्तस्त्रीलिङ्गप्रकरणम् ।

# अथ हलन्तनपुंसकलिङ्गप्रकरणम् ।

**चत्वारि** ( १९३० ) चतुर्शब्दाज्जसि शसि च विभक्तौ 'जश्शसोः शिः' इति श्यादेशे 'शि सर्वनामस्थानम्' इति सर्वनामस्थानसंज्ञायां 'चतुरनडुहोरामुदात्तः' इत्यामि अनुबन्धलोपे 'इको यणचि' इति यणि उक्तं रूपं जातम् ।

**एनयोः** ( १९५१ )—'इदम्' शब्दाद् ओसि विभक्तौ 'अन्वादेशे नपुंसके एनद्वक्तव्यः' इति वार्तिकेन एनदादेशे त्यदाद्यत्वे पररूपत्वे च कृते 'ओसि च' इत्यनेन अदन्ताङ्गस्यैकारे अयादेशे सकारस्य रुत्वे विसर्गे 'एनयोः' इति सिद्धम् ।

**अहानि** ( १९३० )—'अहन्' शब्दाज्जसि विभक्तौ 'जश्शसोः शिः' इति जसः स्थाने श्यादेशे अनुबन्धलोपे 'शि सर्वनामस्थानम्' इति सर्वनामस्थानसंज्ञायां 'सर्वनामस्थाने चासम्बुद्धौ' इति नान्तस्योपधाया दीर्घे 'अहानि' इति सिद्धम् ।

**अहोभ्याम्** ( १९२५, ३७, ४१, ५० )—'अहन्' शब्दात् भ्यामि विभक्तौ 'स्वादिष्वसर्वनामस्थाने' इति पदसंज्ञायाम् 'अहन्' इत्यनेन नस्य रुत्वे 'हशि च' इत्युत्वे 'आद्गुणः' इति गुणे 'अहोभ्याम्' इति जातम् ।

**अहःसु** ( १९३५ )—'अहन्' शब्दात्सुपि विभक्तौ स्वादिष्विति पदसंज्ञायाम् 'अहन्' इति नस्य रुत्वे अनुबन्धलोपे 'खरवसानयोर्विसर्जनीयः' इति रेफस्य विसर्गे 'अहःसु' इति सिद्धम् ।

**गोचा** ( १९५१ )—गामञ्चतीति विग्रहे क्विनि तस्य सर्वापहारे उपपदसमासे सुब्लुकि समासत्वात् प्रातिपदिकसंज्ञायां टाविभक्तौ अनुबन्धलोपे 'गो अञ्च् आ' इति दशायाम् 'अनिदितां हल उपधायाः क्ङिति' इति नलोपे 'यचि भम्' इति भसंज्ञायां सत्याम् 'अचः' इत्यनेन अचोऽकारस्य लोपे 'गोचा' इति । पूजायान्तु 'नाञ्चेः पूजायाम्' इति नलोपनिषेधे सति 'अवङ्स्फोटायनस्य' इत्यवङि सवर्णदीर्घे 'गवाञ्चा' इति । अवङभावपक्षे 'सर्वत्र विभाषा गोः' इति पाक्षिके प्रकृतिभावे 'गो अञ्चा' इति । प्रकृतिभावाभावपक्षे 'एङः पदान्तादति' इति पूर्वरूपे 'गोऽञ्चा' इति बोध्यम् ।

गवाक्छब्दस्य रूपाणि—

गवाक्छब्दस्य रूपाणि क्लीबेऽर्चागतिभेदतः ।<br>
असन्ध्यवङ्पूर्वरूपैर्नवाधिकशतम्मतम् ॥ १ ॥<br>
स्वम्सुप्सु नवषड्भादौ षट्के स्युस्त्रीणि जश्शसोः ।<br>
चत्वारि शेषे दशके रूपाणीति विभावय ॥ २ ॥

**प्रथमायां** (१६)—गवाक-गवाग्-गोअक्-गोअग्-गोऽक्-गोऽग्, गवाङ्-गोअङ्-गोऽङ् (९) गोची-गवाची-गोअची-गोऽची (४) गवाञ्चि-गोअञ्चि-गोऽञ्चि(३)।

**द्वितीयायां** (१६)—पूर्ववत्।

**तृतीयायां** (१६)—गोचा-गवाचा-गोअचा-गोऽचा (४)। गवाग्भ्याम्-गोअग्भ्याम्-गोऽग्भ्याम्, गवाङ्भ्याम्-गोअङ्भ्याम्-गोऽङ्भ्याम् (६)। गवाग्भिः-गोअग्भिः-गोऽग्भिः गवाङ्भिः-गोअङ्भिः-गोऽङ्भिः (६)।

**चतुर्थ्यां** (१६)—गोचे-गवाचे-गोअचे-गोऽचे (४)। गवाग्भ्याम्-गोअग्भ्याम्-गोऽग्भ्याम् गवाङ्भ्याम्-गोअङ्भ्याम्-गोऽङ्भ्याम् (६)। गवाग्भ्यः-गोअग्भ्यः-गोऽग्भ्यः, गवाङ्भ्यः, गोअङ्भ्यः, गोऽङ्भ्यः (६)।

**पञ्चम्यां** (१६)—गोचः-गवाचः-गोअचः-गोऽचः (४) गवाग्भ्याम्—गोअग्भ्याम्-गोऽग्भ्याम्, गवाङ्भ्याम्-गोअङ्भ्याम्-गोऽङ्भ्याम् (६)। गवाग्भ्यः-गोअग्भ्यः,-गोऽग्भ्यः, गवाङ्भ्यः-गोअङ्भ्यः-गोऽङ्भ्यः (६)।

**षष्ठ्यां** (१२)—गोचः-गवाचः-गोअञ्चः-गोऽञ्चः (४)। गोचोः-गवाञ्चोः-गोअञ्चोः-गोऽञ्चोः (४)। गोचाम्-गवाचाम्-गोअचाम्-गोऽचाम् (४)।

**सप्तम्यां** (१७)—गोचि-गवाचि-गोअचि-गोऽचि (४)। गोचोः-गवाचोः गोअचोः-गोऽचोः (४)। गवाक्षु-गोअक्षु-गोऽक्षु, गवाङ्क्षु-गोअङ्क्षु-गोऽङ्क्षु, गवाङ्षु-गोअङ्षु-गोऽङ्षु (९)। ( सर्वं मिलित्वा १०९ रूपाणि भवन्ति। )

**ददन्ति** ( १९४८ )—'ददत्' शब्दाज्जसि 'जश्शसोः शिः' इति जसः श्यादेशे अनुबन्धलोपे 'शि सर्वनामस्थानम्' इति सर्वनामस्थानसंज्ञायां 'नपुंसकस्य झलचः' इति नुमि प्राप्ते 'नाभ्यस्ताच्छतुः' इति निषेधे कृते 'वा नपुंसकस्य' इति नुमि अनुबन्धलोपे नस्यानुस्वारे परसवर्णे च कृते 'ददन्ति' इति। नुमभावे ददति' इति।

**तुदन्ती** ( १९२३,३६,४३ )—'तुदत्' शब्दाद् औ विभक्तौ 'नपुंसकाच्च' इति औङः श्यादेशे अनुबन्धलोपे 'तुदत् ई' इति स्थिते 'आच्छीनद्योर्नुम्' इति नुमि अनुबन्धलोपे नस्यानुस्वारे परसवर्णे च कृते 'तुदन्ती' इति। नुमभावे तुदती' इति।

**दीव्यन्ती** ( १६२१,३८,४२,४९ )—'दीव्यत्' शब्दाद् औविभक्तौ 'नपुंसकाच्च' इति औङः श्यादेशे अनुबन्धलोपे दीव्यत् ई' इति दशायाम् 'शप्श्यनोर्नित्यम्' इति नुमि अनुबन्धलोपे नस्यानुस्वारे परसवर्णे च कृते 'दीव्यन्ती' इति सिद्धम्।

**धनूंषि** ( १९३५,४५,४७ )—'धनुस्' शब्दाज्जसि विभक्तौ 'जश्शसोः शिः' इति जसः श्यादेशे अनुबन्धलोपे 'शि सर्वनामस्थानम्' इति सर्वनामस्थानसंज्ञायां 'नपुंसकस्य झलचः' इति नुमि अनुबन्धलोपे 'सान्तमहतः संयोगस्य' इति सान्तसंयोगस्योपधायाः दीर्घे 'नश्चापदान्तस्य झलि' इत्यनुस्वारे 'नुम्विसर्जनीयशर्व्यवायेऽपि' इति सस्य षत्वे 'धनूंषि' इति सिद्धम् ।

**पयांसि** ( १९२५ ) 'पयस्' शब्दाज्जसि 'जश्शसोः शिः' इति श्यादेशे अनुबन्धलोपे 'शि सर्वनामस्थानम्' इति सर्वनामस्थानसंज्ञायां 'नपुंसकस्य झलचः' इति नुमि अनुबन्धलोपे 'सान्तमहतः संयोगस्य' इति सान्तसंयोगस्योपधाया दीर्घे 'नश्चापदान्तस्य झलि' इत्यनुस्वारे 'पयांसि' इति ।

**सुपुमांसि** ( १९४६ )—'सुपुंस्' शब्दाज्जसि 'जश्शसोः शिः' इति जसः स्थाने श्यादेशे अनुबन्धलोपे 'शि सर्वनामस्थानम्' इति सर्वनामस्थानसंज्ञायां 'पुंसोऽसुङ्' इत्यसुङि अनुबन्धलोपे 'सुपुमस् इ' इति स्थिते 'नपुंसकस्य झलचः' इति नुमि अनुबन्धलोपे 'सान्तमहतः संयोगस्य' इति दीर्घे नस्यानुस्वारे 'सुपुमांसि' इति सिद्धम् ।

इति सोत्तरायां प्रश्नावल्यां हलन्तनपुंसकलिङ्गप्रकरणम् ।

---

# अथाऽव्ययप्रकरणम् ।

**'स्वरादिनिपातमव्ययम्'** ( १९५० )—स्वर् आदिर्येषां ते स्वरादयः, ते च निपाताश्चेति समाहारद्वन्द्वः, अव्ययम् इति पृथक् पदम् । 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति स्मरणात्—'स्वरादयो निपाताश्च अव्ययसंज्ञाः स्युः' इति सूत्रार्थः ।

**कृन्मेजन्तः** (१९४८)—कृयो मान्त एजन्तश्च तदन्तमव्ययसंज्ञं स्यादित्यर्थः ।

**क्त्वातोसुन्कसुनः** ( १९२३ )—क्त्वाप्रत्ययान्तः तोसुन् प्रत्ययान्तः कसुन्प्रत्ययान्तश्च अव्ययसंज्ञः स्यादित्यर्थः ।

**उदेतोः** (१९४४,४६)—उत्पूर्वादिण्धातोः भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन्' इति सूत्रेण तोसुन् प्रत्ययेऽनुबन्धलोपे गुणे उपसर्गसम्बन्धिनस्तस्य जश्त्वे 'उदेतोस्' इत्यस्य तोसुन् प्रत्ययान्तत्वेन 'क्त्वातोसुन्कसुनः' इत्यनेन अव्यय-

संज्ञायाम् 'अव्ययादाप्सुपः' इत्यनेन तस्माद्विहितस्य सोर्लुकि सकारस्य रुत्वे विसर्गे 'उदैतोः' इति सिद्धम् ।

**अव्ययलक्षणम्** ( १६४५ )—"सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥" इति । त्रिषु लिङ्गेषु, सर्वासु च विभक्तिषु, सर्वेषु वचनेषु च यत् न व्येति = विकारं न प्राप्नोति, किन्तु सदृशम् = एकप्रकारकम् एव भवति तद् 'अव्ययम्' इत्यर्थः ।

**भाषार्थः**—जिस शब्दका तीनों लिङ्गों में सभी विभक्तियों में, सभी वचनों में समान रूप हो—और कुछ भी विकार को प्राप्त न करे, वह अव्यय कहलाता है ।

**पिधानम्** ( १९४४,४६ )—'पिधानम्' इत्यव्ययपदम् । अत्र 'भागुरि' नामकाचार्यमते 'अपीत्युपसर्गस्याऽकारस्य लोपे अव्ययादाप्सुपः' इति सुलोपे च कृते 'पिधानम्' इति सिद्धं भवति । तदाह लघुकौमुद्याम्—"वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः । आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥" इति ।

इति पण्डित श्री रामचन्द्र झा व्याकरणाचार्यविरचितायां सोत्तरायां प्रश्नावल्यां सुबन्तप्रकरणं समाप्तम् ।

---

# अथ तिङन्ते भ्वादिप्रकरणम्

**भवति** ( १९४३ )—भूधातोः 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति खले कपोतन्यायेन कर्तरि दशापि लकाराः प्राप्ताः, एषु केनाऽत्र भाव्यमित्याकाङ्क्षायां 'वर्तमाने लट्' इति भूधातोर्वर्तमानक्रियावृत्तित्वविवक्षायां लटि अनुबन्धलोपे 'भू ल्' इति दशायां 'लस्य' इत्यधिकृत्य 'तिप्तस्झिसिप्थस्थमिब्वस्मस्ताताञ्झथासाथान्ध्वमिड्वहिमहिङ्' इत्येतेऽष्टादश लादेशाः प्राप्ताः ततश्च 'लः परस्मैपदम्' इत्यनेन अष्टादशानामप्येषां परस्मैपदसंज्ञा सञ्जाता, एवं 'तङानावात्मनेपदम्' इत्यनेन तङ्प्रत्याहारान्तःपातिनां नवानामात्मनेपदसंज्ञा सञ्जाता एवं सति तिबादयः परस्मैपदसंज्ञाः, तादयश्च आत्मनेपदसंज्ञा, एषां मध्यादत्र परस्मैपदसंज्ञिनः आहोस्विद् आत्मनेपदसंज्ञिनः प्रत्ययाः स्युरिति सन्देहे 'शेषात्कर्तरि परस्मैपदम्' इत्यनेन भूधातोरात्मनेपदनिमित्तहीनत्वात्कर्तरि परस्मैपदं प्राप्तं, ततः परस्मैपदसंज्ञिनां नवानां मध्यात्क-

तमेन भाव्यमित्याकांक्षायाम् 'तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः' इत्यनेन क्रमात् त्रयाणां त्रिकाणां प्रथममध्यमोत्तमसंज्ञासु जातासु च लब्धप्रथमादिसंज्ञानां तिङस्त्रयाणां वचनानां प्रत्येकमेकवचनद्विवचनबहुवचनसंज्ञासु अत्र प्रथमेन भाव्यम्, उत मध्यमेन आहोस्विद् उत्तमेन इत्याकांक्षायां 'शेषे प्रथमः' इति प्रथमपुरुषो भवितुं युक्तस्तथापि त्रीणि वचनानि, एष्वपि कतमेन भाव्यमित्याकांक्षायां 'द्व्येकयोर्द्विवचनैकवचने' इत्यनेनाऽत्र एकवचनस्य विवक्षायां प्रथमपुरुषे तिपि जाते अनुबन्धलोपे 'भू ति' इति स्थिते 'तिङ्शित्सार्वधातुकम्' इत्यनेन तिपः सार्वधातुकसंज्ञायां 'सार्वधातुकार्धधातुकयोः' इत्यनेन गुणे प्राप्ते 'भूसुवोस्तिङि' इत्यनेन गुणनिषेधे 'कर्तरि शप्' इति शपि अनुबन्धलोपे भू 'अ ति' इति जाते ''तिङ्शित्सार्वधातुकम्'' इति शपोऽकारस्य सार्वधातुकसंज्ञायां 'सार्वधातुकार्धधातुकयोः' इत्यनेन भुव उकारस्य गुणे 'एचोऽयवायावः' इत्यनेन अवादेशे ''भवति' इति सिद्धम् ।

**बभूव**—( १९३९, ४२, ५० )—भूधातोः 'परोक्षे लिट्' इति लिटि इकारटकारयोरित्संज्ञायां लोपे च कृते 'भू ल्' इति स्थिते 'तिप्तस्झि' इति लः स्थाने तिपि तत्स्थाने 'परस्मैपदानां णलतुसुस्थलथुसणल्वमाः' इति णलि अनुबन्धलोपे 'भू अ' इति दशायां नित्यत्वाद्गुणवृद्धी बाधित्वा 'भुवो वुग्लुङ्लिटोः' इति भूधातोर्वुगागमे अनुबन्धलोपे 'भुव् अ' इति जाते 'लिटि धातोरनभ्यासस्य' इति भुवो द्वित्वे 'भुव् भुव् अ' इति दशायां 'पूर्वोऽभ्यासः' इति पूर्वस्य 'भुव्' इत्यस्य अभ्याससंज्ञायां 'हलादिः शेषः' इति वलोपे 'ह्रस्वः' इत्यनेन ह्रस्वे 'भु भूव् अ' इति स्थिते 'भवतेरः' इत्यभ्यासोकारस्य अकारे 'भ भूव् अ' इति स्थिते 'अभ्यासे चर्च' इत्यभ्याससंज्ञकस्य भस्य बकारे 'बभूव' इति सिद्धम् ।

**बभूविथ** ( १९४४, ५१ )—भूधातोः 'परोक्षे लिट्' इति लिटि अनुबन्धलोपे 'भू ल्' इति स्थिते लः स्थाने मध्यम-पुरुषैकवचनविवक्षायां सिपि 'लिट् च' इति सिपः आर्धधातुकसंज्ञायां 'परस्मैपदानां णलतुसुस्थलथुसणल्वमाः' इति सिपस्थलादेशे अनुबन्धलोपे 'आर्धधातुकस्येड्वलादेः' इति थस्य इडागमे अनुबन्धलोपे 'भू इ थ' इति दशायां 'भुवो वुग् लुङ्लिटोः' इति भुवो वुगागमे अनुबन्धलोपे 'भुव् इ थ' इति जाते 'लिटि धातोरनभ्यासस्य' इति द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्याससंज्ञायां 'हलादिः शेषः' इति वलोपे 'ह्रस्व' इत्यनेन अभ्यासस्य ह्रस्वे 'भु भूव् इ थ' इति जाते 'भवतेरः' इत्यभ्यासस्योकारस्य अकारे 'भ भूव् इ थ' इति स्थिते 'अभ्यासे चर्च' इति भस्य बत्वे 'बभूविथ' इति सिद्धम् ।

**भविता** ( १९५२ )—भूधातोः 'अनद्यतने लुट्' इति लुटि तत्स्थाने तिपि अनुबन्धलोपे 'तिङ्शित्सार्वधातुकम्' इति तिपः सार्वधातुकसंज्ञायां शपि प्राप्ते तम्प्रबाध्य 'स्यतासीलृलुटोः' इति तासप्रत्यये 'आर्धधातुकं शेषः' इति तासप्रत्ययस्यार्धधातुकसंज्ञायाम् 'आर्धधातुकस्येड्वलादेः' इति इटि अनुबन्धलोपे 'भू इ तास् ति' इति दशायां सार्वधातुकार्धधातुकयोः' इति गुणे अवादेशे 'लुटः प्रथमस्य डारौरसः' इति तिपो डादेशे अनुबन्धलोपे डित्वसामर्थ्याद् अभस्यापि टेर्लोपे 'भविता' इति सिद्धम् ।

**भवानि** ( १९४९ )—भूधातोः 'लोट् च' इति 'आशिषि लिङ्लोटौ' इति वा लोटि तत्स्थाने 'तिप्तस्झि०' इत्यादिना मिपि अनुबन्धलोपे 'भू मि' इति स्थिते 'तिङ्शित्सार्वधातुकम्' इति सार्वधातुकसंज्ञायां 'कर्तरि शप्' इति शपि अनुबन्धलोपे शपः सार्वधातुकत्वात् सार्वधातुकार्धधातुकयोः' इति गुणे अवादेशे 'भव मि' इति दशायां 'लोटो लङ्वत्' इति लङ्कार्यातिदेशेन 'तस्थस्थमिपां तान्तन्तामः' इति मिपोऽमादेशे प्राप्ते तं प्रबाध्य 'मेर्निः' इति मेर्न्यादेशे इकारोच्चारणसामर्थ्यादिकारस्योत्वाऽभावे 'आडुत्तमस्य पिच्च' इत्याटि अनुबन्धलोपे 'अतो दीर्घो यञि' इति दीर्घे 'भवानि' इति सिद्धम् ।

**भवेत्** ( १९४१, ४६ )—भूधातोः 'विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्' इति लिङि तत्स्थाने 'तिप्तस्झि०' इत्यादिसूत्रेण तिपि अनुबन्धलोपे 'भू ति' इति स्थिते तिपः सार्वधातुकसंज्ञायां शपि अनुबन्धलोपे 'भू अ ति' इति स्थिते शित्वात् सार्वधातुकसंज्ञायां 'सार्वधातुकार्धधातुकयोः' इति गुणे अवादेशे 'भव ति' इति जाते 'इतश्च' इतीकारलोपे 'यासुट्परस्मैपदेषूदात्तो ङिच्च' इति यासुटि अनुबन्धलोपे 'लिङः सलोपोऽनन्त्यस्य' इति यासः सस्य लोपे प्राप्ते तं प्रबाध्य 'अतो येयः' इति यासः स्थाने इयादेशे 'भव इय् त्' इति जाते 'आद्गुणः' इति गुणे 'लोपो व्योर्वलि' इति यलोपे 'भवेत्' इति सिद्धम् ।

**भवेयुः** ( १९४० ) भूधातोः 'विधिनिमन्त्रणे'ति लिङि तत्स्थाने झौ 'तिङ्शित्सार्वधातुकम्' इति सार्वधातुकसंज्ञायां 'कर्तरि शप्' इति शपि अनुबन्धलोपे भू अ झि' इति स्थिते शपः सार्वधातुकत्वात् 'सार्वधातुकार्धधातुकयोः' इति गुणे अवादेशे 'भव् अ झि' इति जाते 'झोऽन्तः' इति झस्य अन्तादेशे प्राप्ते तं प्रबाध्य 'झेर्जुस्' इति झस्य जुसि अनुबन्धलोपे 'यासुटपरस्मैपदेषूदात्तो ङिच्च' इति यासुटि अनुबन्धलोपे 'भवयास् उस्' इति स्थिते 'लिङःसलोपोऽनन्त्यस्य' इति सलोपे प्राप्ते तं प्रबाध्य

'अतो येयः' इति यासः इयादेशे 'आद्गुणः' इति गुणे सकारस्य रुत्वे विसर्गे 'भवेयुः' इति सिद्धम् ।

**भूयात्** ( १९३३ )—सत्तार्थकभूधातोः 'आशिषि लिङ्लोटौ' इति लिङि तत्स्थाने 'तिप्तस्झि' इत्यादिना तिपि 'लिङाशिषि' इति आर्धधातुकत्वात् शपोऽभावे 'भू ति' इति स्थिते 'यासुट्परस्मैपदेषूदात्तो ङिच्च' इति यासुटि अनुबन्धलोपे 'भू यास् ति' इति दशायां 'इतश्च' इति तिप इकारस्य लोपे 'किदाशिषि' इति यासुटः कित्वेन 'स्कोः संयोगाद्योरन्ते च' इति सलोपे 'भूयात्' इति दशायां 'सार्वधातुकार्धधातुकयोः' इति गुणे प्राप्ते यासुटः कित्वेन 'क्ङिति चे'ति निषेधे उक्तं रूपं सिद्धम् ।

**भूयास्ताम्** ( १९३१, ४५ )—भूधातोः 'आशिषि लिङ्लोटौ' इति लिङि तत्स्थाने 'तिप्तस्झि' इत्यादिना तसि 'तस्थस्थमिपां तान्तन्तामः' इति तसस्तामादेशे 'लिङाशिषि' इत्यार्धधातुकत्वात् शपोऽभावे 'भू ताम्' इति दशायां यासुट्परस्मैपदेषूदात्तो ङिच्च' इति यासुटि अनुबन्धलोपे 'भू यास् ताम्' इति जाते 'सुट् तिथोः' इति सुटि अनुबन्धलोपे 'भू यास् स् ताम्' इति स्थिते 'किदाशिषि' इति कित्वात गुण निषेधे 'स्कोः संयोगाद्योरन्ते च' इति यासुटः सस्य लोपे 'भूयास्ताम्' इति सिद्धम् ।

**अभूत्** ( १९२०, ३०, ३२, ४३ )—भूधातोः 'लुङ्' इति सूत्रेण लुङि तत्स्थाने 'तिप्तस्झि०' इत्यादिना तिपि अनुबन्धलोपे 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यडागमे अनुबन्धलोपे 'इतश्च' इतीकारलोपे 'अ भू त्' इति दशायां 'च्लि लुङि' इति च्लौ 'च्लेः सिच्' इति सिचि 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु' इति सिचो लुकि सार्वधातुकत्वात् 'सार्वधातुकार्धधातुकयोः' इति गुणे प्राप्ते 'भुसुवोस्तिङि' इति निषेधे 'अभूत्' इति सिद्धम् ।

**अभुवन्** ( १९३७, ३८, ४८ )—भूधातोः 'लुङ्' इति सूत्रेण लुङि तत्स्थाने 'तिप्तस्झि' इत्यादिना झौ 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यडागमे अनुबन्धलोपे 'अ भू झि' इति स्थिते 'च्लि लुङि' इति च्लौ 'च्लेः सिच्' इति तस्य सिचि 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु' इति सिचो लुकि 'अ भू झि' इति स्थिते 'सार्वधातुकार्धधातुकयोः' इति गुणे प्राप्ते 'भूसुवोस्तिङि' इति निषेधे 'झोऽन्तः' इति झस्याऽन्तादेशे 'इतश्च' इतीकारलोपे 'अभू अन्त' इति जाते 'भुवो वुग्लुङ्लिटोः' इति वुगागमे अनुबन्धलोपे 'संयोगान्तस्य लोपः' इति तलोपे 'अभूवन्' इति सिद्धम् ।

**अभूवम्** ( १९२७, ३५ )—भूधातोः 'लुङ्' इति सूत्रेण लुङि तत्स्थाने मिपि

'लुङ्लङ्' इत्यडागमे 'तस्थस्थमिपां तान्तन्तामः' इत्यनेन मिपोऽमादेशे 'च्लि लुङि' इति च्लौ 'च्लेः सिच्' इति सिचि अनुबन्धलोपे 'अ भू स् अम्' इति जाते 'गातिस्था-घुपाभूभ्यः सिचः परस्मैपदेषु' इति सिचो लुकि 'भुवो वुग्लुङ्लिटोः' इति वुगागमे अनुबन्धलोपे 'अभूवम्' इति ।

**आत** ( १९२४ )—अत्धातोर्लिटि तत्स्थाने तिपि 'परस्मैपदानां णलतुसुस्थ-लथुसणल्वमाः' इति तिपो णलादेशे अनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्याससंज्ञायाम् 'हलादिः शेषः' इति लोपे 'अ अत् अ' इति स्थिते 'अत आदेः' इत्यनेन अभ्यासस्यादेरतो दीर्घे 'आ अत् अ' इति जाते सवर्ण-दीर्घे उक्तं रूपं सिद्धम् ।

**आतीत्** ( १९२१, ४७ )—अत्धातोर्लुङि तत्स्थाने तिपि अनुबन्धलोपे 'इतश्च' इतीकारलोपे 'च्लि लुङि' इति च्लौ 'च्लेः सिच्' इति सिचि इचि गते 'अत् स् त्' इति जाते 'आडजादीनाम्' इत्यादि अनुबन्धलोपे 'आटश्च' इति वृद्धौ सिचः सकारस्यार्धधातुकसंज्ञायाम् 'आर्धधातुकस्येड्वलादेः' इतीटि अनुबन्धलोपे 'आत् इ स् त्' इति स्थिते तिपः तकारस्य 'अपृक्त एकाल्प्रत्ययः' इत्यपृक्तसंज्ञायाम् 'अस्तिसिचोऽपृक्ते' इति ईडागमे अनुबन्धलोपे 'आत् इ स् ई त्' इति स्थिते 'इट ईटि' इति सलोपे 'आत् इ ई त्' इति दशायां सलोपस्य त्रैपादिकत्वेन 'पूर्वत्राऽसि-द्धम्' इत्यसिद्धत्वेन दीर्घत्वाऽभावे प्राप्ते 'सिज्लोप एकादेशे सिद्धो वाच्यः' इति वार्ति-केन सिज्लोपस्य असिद्धत्वाऽभावेन सवर्णदीर्घे 'आतीत्' इति सिद्धम् ।

**आतिष्ट** ( १९२३ )—अत्धातोर्लुङि तत्स्थाने 'तिप्तस्झि' इत्यादिना थप्रत्यये 'तस्थस्थमिपांतान्तन्तामः' इत्यनेन थस्य तादेशे 'आडजादीनाम्' इत्यादि अनुबन्ध-लोपे 'आटश्च' इति वृद्धौ 'च्लि लुङि' इति च्लौ 'च्लेः सिच्' इति सिचि अनुबन्धलोपे सस्यार्धधातुकसंज्ञायाम् 'आर्धधातुकस्येड्वलादेः' इत्यनेन सिचः सस्य इटि अनुबन्ध-लोपे 'आतिसूत' इति दशायाम् 'आदेशप्रत्यययोः' इति षत्वे 'ष्टुना ष्टुः' इति ष्टुत्वे 'आतिष्ट' इति ।

**आतिष्म** ( १९२६ )—अत्धातोर्लुङि तत्स्थाने मसि 'आडजादीनाम्' इत्यादि 'आटश्च' इति वृद्धौ 'आत् मस् इति जाते मध्ये च्लौ तस्य सिचि अनुबन्धलोपे सस्यार्धधातुकसंज्ञायाम् 'आर्धधातुकस्येड्वलादेः' इतीटि अनुबन्धलोपे 'आदेशप्रत्यय-योः' इति षत्वे 'नित्यं ङितः' इति सलोपे 'आतिष्म' इति सिद्धम् ।

सिषेधिथ—( १९५२ ) षिध्धातोर्लिटः सिपि 'धात्वादेः षः सः' इति सत्वे 'परस्मैपदानाम्–'इति सिपस्थलि द्वित्वे अभ्याससंज्ञायां 'हलादिः शेषः' इति अभ्यासावयवधकारस्य लोपे 'सिसिध् थ' इति जाते 'आदेशप्रत्यययोः' इति सस्य षत्वे 'लिट् च' इति थलः आर्धधातुकत्वात् तस्मिन् परे 'आर्धधातुकस्येड्वलादेः' इति थलः इटि अनुबन्धलोपे 'पुगन्त—' इति गुणे 'सिषेधिथ' इति।

नेर्गदनद ( १९३९, ४६ )—"नेर्गद-नद-पत-पद-घु-मा-स्यति-हन्ति-याति-वाति-द्राति-प्साति-वपति-वहति-शाम्यति-चिनोति-देग्धिषु च" इति सूत्र-स्वरूपम्।

जगाद, जगद ( १९२५, ५२ )—गद्धातोर्लिटि तत्स्थाने तिपि 'परस्मैपदानाम्–' इति तिपः णलि अनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे 'पूर्वोऽभ्यासः' इति अभ्यासत्वे 'हलादिः शेषः' इति दकारस्य लोपे 'कुहोश्चुः' इति अभ्यासगकारस्य चुत्वेन जकारे जगद् अ' इति दशायाम् 'अत उपधायाः' इति वृद्धौ 'जगाद' इति सिद्धम्। उत्तमपुरुषे तु 'णलुत्तमो वा' इत्यनेन णलः पाक्षिकत्वे णित्वे सति 'जगाद' 'जगद' इति रूपद्वयं भवतीति विशेषः।

अगादीत ( १९२२, ५० )—गद्धातोर्लुङस्तिपि 'इतश्च' इतीकारलोपे 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे 'च्लि लुङि' इति च्लौ 'च्लेः सिच्' इति सिचि अनुबन्धलोपे आर्धधातुकं शेषः' इत्यनेन सस्यार्धधातुकसंज्ञायाम् 'आर्धधातुकस्येड्वलादेः' इत्यनेन सस्य इटि अनुबन्धलोपे 'अस्तिसिचोऽपृक्ते इत्यनेन तकारस्य ईडागमे 'इट ईटि' इति सलोपे 'सिज्लोप एकादेशे सिद्धो वाच्यः' इति सिज्लोपस्याऽसिद्धत्वाभावेन सवर्णदीर्घे 'अतो हलादेर्लघोः' इति वृद्धौ 'अगादीत्' इति। वृद्ध्यभावे 'अगदीत्' इति।

नेदतुः ( १९४३ )—णद्धातोर्लिटस्तसि 'णो नः' इति धातोर्णस्य नत्वे 'परस्मैपदानाम्' इति तसोऽनुसादेशे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्याससंज्ञायां 'हलादिः शेषः' इत्यन्त्यहलो लोपे ,न नद् अतुस्' इति स्थिते 'अत एकहल्मध्येऽनादेशादेर्लिटि' इति एत्वेऽभ्यासलोपे सस्य रुत्वे विसर्गे 'नेदतुः' इति सिद्धम्।

आनर्च ( १९५१ )—अर्च् धातोर्लिटस्तिपि 'परस्मैपदानाम्' इति तिपो णलि अनुबन्धलोपे 'लिटिधातोरनभ्यासस्य' इति द्वित्वे अभ्याससंज्ञायां 'हलादिः शेषः'

इति हलो लोपे 'अ अर्च् अ' इति स्थिते 'अत आदेः' इत्यनेन अभ्यासाकारस्य दीर्घे 'तस्मान्नुड्द्विहलः' इति नुटयनुबन्धलोपे 'आनर्च' इति।

**आनर्चतुः** ( १९४४ )—अर्चधातोर्लिटस्तसि 'परस्मैपदानाम्' इति तसोऽतुसि 'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्याससंज्ञायां हलादिशेषे च कृते 'अत आदेः' इत्यभ्यासाकारस्य दीर्घे 'तस्मान्नुड्द्विहलः' इति नुटयनुबन्धलोपे सस्य रुत्वे विसर्गे 'आनर्चतुः' इति सिद्धम्

**अकटीत** ( १९४३ )—कट्धातोर्लुङि तत्स्थाने तिपि अनुबन्धलोपे 'इतश्च' इतीकारलोपे लुङ्लङ्' इत्यडागमे मध्ये च्लौ तस्य सिचि अनुबन्धलोपे 'अकट् स् त्' इति जाते सस्यार्धधातुकसंज्ञायाम् 'आर्धधातुकस्येड्वलादेः' इति इटि अनुबन्धलोपे 'अस्तिसिचोऽपृक्ते' इत्यनेन तस्य ईटि च जाते अनुबन्धलोपे 'अतो हलादेर्लघोः' इति वृद्धौ प्राप्तायां 'ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्' इति तन्निषेधे 'इट ईटि' इति सिचः सस्य लोपे सिज्लोपस्य सिद्धत्वात् सवर्णदीर्घे 'अकटीत्' इति सिद्धम्।

**गोपायाञ्चकार** ( १६३२, ३४, ४३, )—गुप्धातोः 'परोक्षे लिट्' इति लिटि प्राप्ते तं प्रबाध्य 'गुपूधूपविच्छिपणिपनिभ्य आयः' इति नित्यम् आयप्रत्यये प्राप्ते तम्बाधित्वा 'आयादय आर्धधातुके वा' इति विकल्पेन आयप्रत्यये कृते तस्यार्धधातुकत्वात् 'पुगन्तलघूपधस्य च' इति गुणे 'सनाद्यन्ता धातवः' इति धातुसंज्ञायां लिटि 'कास्यनेकाच आम् वक्तव्यः' इत्याम्प्रत्यये कृते आमो मकारस्येत्संज्ञायां लोपे च 'लिटि आस्कासोराम्विधानान्मकारस्येत्वाभावेन लोपाभावे 'गोपाय आम् लिट्' इति स्थिते आमप्रत्ययस्यार्धधातुकसंज्ञायाम् 'अतो लोपः' इत्यल्लोपे 'गोपाय् आम् लिट्' इति जाते 'आमः' इति लिटो लुकि लिटः कृत्त्वात्प्रत्ययलक्षणेन गोपायामित्यस्य कृदन्तत्वात्प्रातिपदिकत्वेन सुबुत्पत्तौ 'कृन्मेजन्तः' इति अव्ययत्वात् 'अव्ययादाप्सुपः' इति तस्यापि लुकि गोपायामित्यवशिष्टे 'कृञ्चानुप्रयुज्यते लिटि' इति लिट्परककृञोऽनुप्रयोगे 'गोपायाम् कृ लिट्' इति जाते लिटस्तिपि तिपो णलि अनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इति कृञो द्वित्वे 'गोपायाम् कृ कृ अ' इति भूते 'पूर्वोऽभ्यासः' इति पूर्वस्य कृञोऽभ्याससंज्ञायाम् 'उरत्' इत्यभ्यासऋवर्णस्य अकारे 'उरण् रपरः' इति रपरे च कृते 'गोपायाम् कर् कृ अ' इति जाते 'हलादिः शेषः' इति रलोपे 'कुहोश्चुः' इत्यनेन अभ्यासककारस्य चुत्वेन चकारे मस्यपदान्तत्वादनुस्वारे परसवर्णे च 'अचो ञ्णिति' इति वृद्धौ रपरत्वे च कृते 'गोपायाञ्चकार' इति आयप्रत्ययाभावे 'जुगोप' इति च सिद्धं रूपं भवति।

**जुगोपिथ** ( १९२२, २९ )—गुप् धातोरायप्रत्ययाभावपक्षे लिटि तत्स्थाने सिपि सिपस्थलादेशे अनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्याससंज्ञायां 'हलादिः शेषः' इत्यनेन अन्त्यहलो लोपे 'कुहोश्चुः' इति चुत्वे 'पुगन्तलघूपधस्य च' इति गुणे 'स्वरतिसूतिसूयतिधूञूदितो वा' इत्यनेन वैकल्पिके इडागमे अनुबन्धलोपे 'जुगोपिथ' इति । इडभावपक्षे 'जुगोप्थ' इति च सिद्धं भवति ।

**गुप्धातोर्लुटि** ( १९३८ )—

| | | |
|---|---|---|
| गोपायिता | गोपायितारौ | गोपायितारः |
| गोपायितासि | गोपायितास्थः | गोपायितास्थ |
| गोपायितास्मि | गोपायितास्वः | गोपायितास्मः |

आयप्रत्ययाऽभावे— इडभावे—

| | | | | | |
|---|---|---|---|---|---|
| गोपिता | गोपितारौ | गोपितारः । | गोप्ता | गोप्तारौ | गोप्तारः |
| गोपितासि | गोपितास्थः | गोपितास्थ । | गोप्तासि | गोप्तास्थः | गोप्तास्थ |
| गोपितास्मि | गोपितास्वः | गोपितास्मः । | गोप्तास्मि | गोप्तास्वः | गोप्तास्मः |

**गुप्धातोर्लृटि** ( १९४१ )—

| | | |
|---|---|---|
| गोपायिष्यति | गोपायिष्यतः | गोपायिष्यन्ति |
| गोपायिष्यसि | गोपायिष्यथः | गोपायिष्यथ |
| गोपायिष्यामि | गोपायिष्यावः | गोपायिष्यामः |

आयप्रत्ययाऽभावे— इडभावपक्षे—

| | | | | | |
|---|---|---|---|---|---|
| गोपिष्यति | गोपिष्यतः | गोपिष्यन्ति । | गोप्स्यति | गोप्स्यतः | गोप्स्यन्ति |
| गोपिष्यसि | गोपिष्यथः | गोपिष्यथ । | गोप्स्यसि | गोप्स्यथः | गोप्स्यथ |
| गोपिष्यामि | गोपिष्यावः | गोपिष्यामः । | गोप्स्यामि | गोप्स्यावः | गोप्स्यामः |

**अगोपीत्** ( १९२१, २८, ४५, ४६ )—गुप् धातोरायप्रत्ययाऽभावपक्षे लुङि तत्स्थाने तिपि अनुबन्धलोपे 'इतश्च' इतीकारलोपे 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यडागमे अनुबन्धलोपे 'अगुप् त्' इति स्थिते 'च्लि लुङि' इति च्लौ 'च्लेः सिच्' इति सिचि अनुबन्धलोपे 'अगुप् स् त्' इति जाते 'स्वरतिसूतिसूयतिधूञूदितो वा' इति विभाषया इटि अनुबन्धलोपे 'अस्तिसिचोऽपृक्ते' इति तस्य ईटि अनुबन्धलोपे 'अगुप् इ स् ई त्' इति स्थिते 'इट ईटि' सलोपे सवर्णदीर्घे 'अगुप् ई त्' इति दशायां 'वदव्रजहलन्तस्याचः' इति वृद्धौ प्राप्तायां 'नेटि' इति निषेधे 'पुगन्तलघूपधस्य च'

इति गुणे 'अगोपीत्' इति । इडभावपक्षे 'वदव्रजे'ति वृद्धौ 'अगौप्सीत्' इति च सिद्धं भवति ।

**अगौप्ताम्** ( १९४४, ४६ )—गुप्धातोर्लुङि प्रथमपुरुषद्विवचने आयप्रत्ययपक्षे 'अगोपायिष्टाम्' इति । आयप्रत्ययाऽभावपक्षे 'स्वरतिसूती'ति इटि 'अगोपिष्टाम्' इति । इडभावपक्षे 'अगौप्ताम्' इति। तथाहि—लुङः स्थाने तसि तसस्तामादेशे 'लुङ्लङ्'त्यडागमे अनुबन्धलोपे मध्ये च्लौ तस्य सिचि अनुबन्धलोपे 'अगुप् स् ताम्' इति स्थिते 'वदव्रजहलन्तस्याचः' इति वृद्धौ 'झलो झलि' इति सलोपे 'अगौप्ताम्' इति सिद्धम् ।

**चिक्षेथ** ( १९४४ )—क्षिधातोर्लिटि तत्स्थाने सिपि 'परस्मैपदानामि'ति सिपः स्थाने थलादेशे अनुबन्धलोपे 'क्षि थ' इति स्थिते 'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्यासादिकार्ये 'चि क्षि थ' इति स्थिते 'क्षिधातोरजन्तत्वात् तासौ नित्यानिट्कत्वाच्च ऋतो भारद्वाजस्य' इति भारद्वाजमते इटि अनुबन्धलोपे 'अचि श्नुधातुभ्रुवाम्' इति इयङि 'चिक्षयिथ' इति । इडभावपक्षे गुणे 'चिक्षेथ' इति सिद्धं रूपं भवति ।

**क्षीयात्** ( १९४७ )—क्षिधातोराशिषि लिङि तत्स्थाने तिपि अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे 'यासुट्परस्मैपदेषूदात्तो ङिच्च' इति यासुट्यनुबन्धलोपे 'क्षि यास्त्' इति दशायां 'किदाशिषि' इति यासुटः कित्वेन 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घे 'स्कोः संयोगाद्योरन्ते च' इति सलोपे 'क्षीयात्' इति सिद्धम् ।

**अक्षैषीत्** ( १९४३, ५१ )—क्षिधातोर्लुङि तिपि अनुबन्धलोपे 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे मध्ये च्लौ तस्य सिचि इचि गते 'अक्षि स् त्' इति स्थिते 'अस्ति सिचोऽपृक्ते' इति ईटि अनुबन्धलोपे 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धौ 'आदेशप्रत्यययोः' इति षत्वे 'अक्षैषीत्' इति जातम् ।

**अक्षैषीः** ( १९३५ )—क्षिधातोर्लुङि सिपि अनुबन्धलोपे 'इतश्च' इति सिप इकारलोपे 'लुङ्लङ्' इत्यडागमे च्लौ सिचि अनुबन्धलोपे 'अस्ति सिचोऽपृक्ते' इतीटि अनुबन्धलोपे 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धौ सिचः सस्य षत्वे सिपः सकारस्य रुत्वे विसर्गे 'अक्षैषीः' इति ।

**क्राम्यति** ( १९२४ )—क्रम्धातोर्लटि तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि प्राप्ते तम्प्रबाध्य 'वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः' इत्यनेन

अनुबन्धलोपे 'क्रमः परस्मैपदेषु' इति दीर्घे 'क्राम्यति' इति। श्यनोऽभावे शपि 'क्रामति' इति च सिद्धं भवति।

**अक्रमीत्** ( १९३४ )—क्रम्धातोर्लुङि तिपि अनुबन्धलोपे 'इतश्च' इति इकारलोपे 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे च्लौ च्लेः सिचि अनुबन्धलोपे 'आर्धधातुकस्येड्वलादेः' इत्यनेन सस्य इटि अनुबन्धलोपे 'अस्तिसिचोऽपृक्ते' इत्यनेन तस्य च ईटि अनुबन्धलोपे 'अक्रम् इ स् ई त्' इति जाते 'इट ईटि' इति सलोपे सवर्णदीर्घे 'अक्रमीत्' इति सिद्धम्। अत्र 'अतो हलादेर्लघोः' इति वृद्धिस्तु न, 'ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्' इति निषेधात्।

**पाघ्राध्मा०** ( १९३९ )—'पा-घ्रा-ध्मा-स्था-म्ना-दाण-दृश्यर्ति-सर्ति-शद-सदां पिब-जिघ्र-धम-तिष्ठ-मन-पश्यर्च्छ-धौ-शीय-सीदाः' इति सूत्रस्वरूपम्।

**अपुः** ( १९४३ )—पाधातोर्लुङि तत्स्थाने झौ 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे मध्ये च्लौ तस्य सिचि इचि गते 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु' इति सिचो लुकि 'अपा झि' इति स्थिते 'आतः' इति नियमात् झेर्जुसि अनुबन्धलोपे 'उस्यपदान्तात्' इति पररूपे सकारस्य रुत्वे विसर्गे 'अपुः' इति सिद्धम्।

**ग्लैधातोराशीर्लिङि** ( १९४२ )—

| एत्वपक्षे— | | | एत्वाभावपक्षे— | | |
|---|---|---|---|---|---|
| ग्लेयात् | ग्लेयास्ताम् | ग्लेयासुः। | ग्लायात् | ग्लायास्ताम् | ग्लायासुः |
| ग्लेयाः | ग्लेयास्तम् | ग्लेयास्त। | ग्लायाः | ग्लायास्तम् | ग्लायास्त |
| ग्लेयासम् | ग्लेयास्व | ग्लेयास्म। | ग्लायासम् | ग्लायास्व | ग्लायास्म |

**ग्लेयात्**—ग्लैधातोराशीर्लिङि तिपि अनुबन्धलोपे 'लिङाशिषि' इत्यार्धधातुकत्वात् शबभावे यासुटि अनुबन्धलोपे 'आदेच उपदेशेऽशिति' इत्यात्वे तिप इकारलोपे 'ग्ला यास् त्' इति स्थिते 'स्कोः संयोगाद्योरन्ते च' इति सलोपे 'वाऽन्यस्य संयोगादेः' इत्येत्वे 'ग्लेयात्' इति। एत्वाऽभावे 'ग्लायात्' इति बोध्यम्।

**अग्लासीत्** ( १९२८ )—ग्लैधातोर्लुङि तिपि अनुबन्धलोपे 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे 'आदेच उपदेशेऽशिति' इत्यात्वे मध्ये च्लौ तस्य सिचि इचि गते 'अग्ला स् त्' इति स्थिते 'यमरमनमातां सक् च' इति सकि सिचः सकारस्य इटि च कृते अनुबन्धलोपे 'अग्ला स् इ स् त्' इति दशायाम् 'अस्तिसिचोऽपृक्ते' इति अपृक्तसंज्ञकस्य तस्य ईटि अनुबन्धलोपे 'इट ईटि'

इति सिचः सकारस्य लोपे 'सिज्लोप एकादेशे सिद्धो वाच्यः' इति सिज्लोपस्य सिद्धत्वात् सवर्णदीर्घे 'अग्लासीत्' इति ।

**ह्वर्यात्** ( १९२१, ५१ )—ह्वृधातोराशीर्लिङि तिपि अनुबन्धलोपे यासुटि उटि गते यासुटः कित्वात् 'क्ङिति चे'ति 'सार्वधातुकार्धधातुकयोः' इति प्राप्तगुणनिषेधे 'गुणोर्तिसंयोगाद्योः' इति गुणे 'स्कोः संयोगाद्योरन्ते च' इति सलोपे 'ह्वर्यात्' इति ।

**शृण्मः** ( १९४४ )—श्रुधातोर्लटि तत्स्थाने 'तिप्तस्झि' इत्यादिना मसि 'श्रुवः शृ च' इति श्रुवः 'शृ' आदेशे चकारात् 'श्नु' प्रत्यये च कृते शकारस्येत्संज्ञायां लोपे च विहिते शित्वात् सार्वधातुकत्वे 'सार्वधातुकमपित्' इति श्नोर्ङित्वे 'क्ङिति च' इति गुणनिषेधे 'शृ नु मस्' इति स्थिते णत्वे 'लोपश्चास्यान्यतरस्यां म्वोः' इति उकारलोपे सस्य रुत्वे विसर्गे 'शृण्मः' इति । लोपाऽभावे 'शृणुमः' इति च सिद्धं रूपं भवति ।

**श्रुधातोर्लिटि** ( १९३७ )—

| | | |
|---|---|---|
| शुश्राव | शुश्रुवतुः | शुश्रुवुः |
| शुश्रोथ | शुश्रुवथुः | शुश्रुव |
| शुश्राव–शुश्रव | शुश्रुव | शुश्रुम |

**शृणु** ( १९४३ )—श्रुधातोर्लोटि सिपि 'श्रुवः शृ च' इत्यनेन श्नुप्रत्यये चकारात् 'शृ' आदेशे च कृते श्नुप्रत्ययस्य शस्य 'लशक्वतद्धिते' इतीत्संज्ञायां लोपे च जाते शित्वात्सार्वधातुकत्वे 'सार्वधातुकमपित्' इति ङित्वेन गुणाऽभावे 'सेर्ह्यपिच्च' इत्यनेन सेर्ह्यादेशे 'शृ नु हि' इत्यवस्थायां 'सार्वधातुकमपित्' इति हेर्ङित्वात् उकारस्य च गुणाभावे 'उतश्च प्रत्ययादसंयोगपूर्वात्' इति हेर्लुकि 'शृणु' इति सिद्धम् । तातङ्पक्षे 'शृणुतात्' इति भवति ।

**अशृणवम्** ( १९३५ )—श्रुधातोर्लङि उत्तमपुरुषैकवचने मिपि सार्वधातुकसंज्ञायां शपं प्रबाध्य 'श्रुवः शृ च' इत्यनेन 'शृ' आदेशे श्नुप्रत्यये च कृते अनुबन्धलोपे 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे 'अ शृ नु मि' इति स्थिते 'तस्थस्थमिपां तान्तन्तामः' इति मिपोऽमादेशे 'ऋवर्णान्नस्य णत्वं वाच्यम्' इति णत्वे 'सार्वधातुकार्धधातुकयोः' इति गुणे अवादेशे उक्तं रूपं सिद्धम् ।

**अश्रौषीत्**—श्रुधातोर्लुङि तिपि अनुबन्धलोपे 'लुङ्लङ्' इत्यडागमे मध्ये च्लौ तस्य सिचि इचि गते 'इतश्चे'ति तिप इकारलोपे 'अस्तिसिचः' इतीटि 'अ श्रु स् ई त्' इति

स्थिते सिचः सकारस्यार्धधातुकत्वाद् इटि प्राप्ते 'एकाच उपदेशेऽनुदात्तात्' इति निषेधे 'सिचिवृद्धिः परस्मैपदेषु' इति वृद्धौ षत्वे 'अश्रौषीत्' इति सिद्धम् ।

**जग्मतुः** ( १९२५, ३० )—गम्धातोर्लिटि तत्स्थाने तसि 'परस्मैपदानाम्' इत्यनेन तसोऽतुसादेशे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्याससंज्ञायां 'हलादिः शेषः' इत्यनेन अभ्यासमकारस्य लोपे 'ग गम् अतुस्' इति स्थिते 'कुहोश्चुः' इति गस्य कुत्वेन जकारे 'गमहनजनखनघसां लोपः क्ङित्यनङि' इत्युपधालोपे सकारस्य रुत्वे विसर्गे 'जग्मतुः' इति सिद्धम् ।

**जगन्थ** १९३५)—गम्धातोर्लिटि तत्स्थाने सिपि 'परस्मैपदानाम्' इति सिपो थलि लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्याससंज्ञायां 'हलादिः शेषः' इत्यनेन अभ्यासमकारस्य लोपे 'कुहोश्चुः' इति चुत्वे 'ज गम् थ' इति स्थिते ऋतो भारद्वाजस्य' इत्यनेन भारद्वाजमते पाक्षिके इटि 'जगमिथ' इति । इडभावे अनुस्वारे परसवर्णे च कृते 'जगन्थ' इति सिद्धं भवति ।

**अगमत्** ( १९२१, ४३, ४८, ५२ )—'गम्लृ गतौ' अस्माद्धातोर्लुङि तिपि 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे 'इतश्चे'ति तिप इकारलोपे च्लि 'लुङि' इति च्लौ तस्य सिचि प्राप्ते तं प्रबाध्य 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' इति च्लेरङादेशे अनुबन्धलोपे 'अगमत्' इति सिद्धम् ।

**एधाञ्चक्रे** ( १९२०, २२, ३९, ४३ )—एध्धातोर्लिटि 'इजादेश्च गुरुमतोऽनृच्छः' इत्यामि 'आमः' इति लिटो लुकि 'एध् आम्' इति स्थिते 'कृञ्चानुप्रयुज्यते लिटि' इति लिट्परककृञोऽनुप्रयोगे 'एध् आम् कृ लिट्' इति जाते 'आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य' इत्यात्मनेपदत्वात् लिटः स्थाने तप्रत्यये 'लिटस्तझयोरेशिरेच्' इत्यनेन तस्यैशादेशे अनुबन्धलोपे 'एधाम् कृ ए' इति स्थिते 'लिटि धातोरनभ्यासस्य' इति द्वित्वे प्राप्ते तं परत्वाद्बाधित्वा 'इको यणचि' इति यणि प्राप्ते तं 'द्विर्वचनेऽचि' इति निषेधे 'पुनः प्रसङ्गविज्ञानात् 'लिटि धातोरनभ्यासस्य' इति द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्याससंज्ञायाम् 'उरत्' इत्यभ्यासऋवर्णस्य अत्वे रपरत्वे च कृते 'एधाम् कर् कृ ए' इति जाते हलादिः शेषः' इत्यनेन अभ्यासस्यान्त्यहलो लोपे 'कुहोश्चु' इत्यनेन कस्य चुत्वे 'एधाम् च कृ ए' इति दशायां 'सार्वधातुकार्धधातुकयोः' इति गुणे प्राप्ते 'असंयोगाल्लिट्कित्' इति कित्वेन गुणनिषेधे 'इको यणचि' इति यणि मकारस्यानुस्वारे परसवर्णे च कृते 'एधाञ्चक्रे' इति सिद्धम् ।

एधाञ्चकृषे ( १९-४४, ४६ )—एध्धातोर्लिटि 'इजादेश्च गुरुमतोऽनृच्छः' इत्यामि 'आमः' इति लिटो लुकि 'एध् आम्' इति स्थिते 'कृञ्चानुप्रयुज्यते लिटि' इति लिट्परककृञोऽनुप्रयोगे 'एध् आम् कृ लिट्' इति जाते 'आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य' इत्यात्मनेपदत्वात् लिटः स्थाने थासि 'लिटिधातोरनभ्यासस्य' इति द्वित्वे अभ्याससंज्ञायाम् 'उरत्' इत्यत्वे 'हलादिः शेषः' इत्यभ्यासस्यान्त्यहलो लोपे 'कुहोश्चुः' इत्यभ्यासस्य चुत्वे 'एधाम् च कृ थास्' इति भूते 'थासः से' इत्यनेन 'से' इत्यादेशे 'लिटि च' इत्यार्धधातुकत्वात् 'आर्धधातुकस्येड्वलादेः' इति इटि प्राप्ते 'एकाच उपदेशेऽनुदात्तात्' इति इटो निषेधे 'आदेशप्रत्यययोः' इति षत्वे मस्यानुस्वारे परसवर्णे 'एधाञ्चकृषे' इति सिद्धम् । अत्राऽपि 'असंयोगाल्लिट्कित्' इति कित्वाद् गुणनिषेधो बोध्यः ।

**एधाञ्चकृढ्वे** ( १९२७ )—एध्धातोर्लिटि 'इजादेश्च गुरुमतोऽनृच्छः' इत्यामि 'आमः' इति लिटो लुकि 'कृञ्चानुप्रयुज्यते लिटि' इति लिट्परककृञोऽनुप्रयोगे 'एधाम् कृ लिट्' इति स्थिते लिटः स्थाने ध्वमि अनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्याससंज्ञायाम् 'उरत्' इत्यत्वे रपरत्वे 'हलादिः शेषः' इत्यभ्यासस्यान्तस्य रेफस्य लोपे 'एधाम् क कृ ध्वम्' इति स्थिते 'कुहोश्चुः' इति कस्य चुत्वे 'इणः षीध्वं लुङ्लिटां धोऽङ्गात्' इति धस्य ढत्वे 'टित आत्मनेपदानां टेरे' इत्येत्वे मस्यानुस्वारे परसवर्णे च कृते 'एधाञ्चकृढ्वे' इति जातम् ।

**एधस्व** ( १९४० )—एध्धातोर्लोटि मध्यमपुरुषैकवचने थास्यागते सार्वधातुकसंज्ञायां शपि अनुबन्धलोपे 'थासः से' इति 'से' इत्यादेशे 'एधसे' इत्यवस्थायां 'सवाभ्यां वामौ' इति सकारात्परस्य एकारस्य वादेशे 'एधस्व' इति सिद्धम् ।

**एधै** ( १९२३ )—एधधातोर्लोटि तत्स्थाने उत्तमपुरुषैकवचने इटि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि अनुबन्धलोपे 'एध् अ इ' इति जाते 'टित आत्मनेपदानां टेरे' इति इट इकारस्य एत्वे 'एत ऐ' इति एकारस्य ऐत्वे 'आडुत्तमस्य पिच्च' इत्यादि अनुबन्धलोपे 'एध् आ ऐ' इति स्थिते 'आटश्च' इति वृद्धौ 'एध ऐ' इति भूते 'वृद्धिरेचि' इति वृद्धौ 'एधै' इति सिद्धम् ।

**ऐधिष्ट** ( १९२८, ४९ )—एध्धातोर्लुङि तत्स्थाने प्रथमपुरुषैकवचने ते 'आडजादीनाम्' इत्यादि अनुबन्धलोपे 'आटश्च' इति वृद्धौ 'ऐध् त' इति स्थिते मध्ये च्लौ तस्य सिचि इचि गते सिचः आर्धधातुकत्वात 'आर्धधातुकस्येड्वलादेः' इति इटि

'ऐधिसूत' इति दशायाम् 'आदेशप्रत्यययोः' इति षत्वे ष्टुत्वे च कृते 'ऐधिष्ट' इति जातम् ।

**कामयाञ्चक्रे** ( १९३३ )—कम्धातोः 'कमेर्णिङ्' इति णिङि अनुबन्धलोपे 'अत उपधायाः' इति वृद्धौ 'कामि' इति भूते 'सनाद्यन्ता धातवः' इति धातुत्वाल्लिटि 'कास्यनेकाच आम्वक्तव्यः' इत्यामि 'णेरनिटि' इति णिलोपे प्राप्ते तं प्रबाध्य 'अयामन्ताल्वाय्येत्न्विष्णुषु' इति णिङ इकारस्य अयादेशे 'कामय् आम् लिट्' इति भूते 'आमः' इति लिटो लुकि 'कृञ्चानुप्रयुज्यते लिटि' इति लिट्परकक्रञोऽनुप्रयोगे लिटो लः स्थाने प्रथमपुरुषैकवचने तादेशे 'लिटस्तझयोरेशिरेच्' इति तस्य स्थाने एशि अनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे 'पूर्वोऽभ्यासः, इत्यभ्याससंज्ञायाम् 'उरत्' इत्यभ्यासऋवर्णस्य अत्वे रपरत्वे च कृते 'कामयाम् कर् कृ ए' इति स्थिते' हलादिः शेषः' इति अभ्याससम्बन्धिनो रेफस्य लोपे 'कुहोश्चुः' इति अभ्यासककारस्य चुत्वे 'इको यणचि' इति यणि मस्यानुस्वारे परसवर्णे 'कामयाञ्चक्रे' इति । णिङोऽभावे तु लिटः स्थाने आत्मनेपदे तप्रत्यये एशि द्वित्वे अभ्यासादिकार्ये 'चकमे' इति च सिद्धं भवति।

**अचीकमत** ( १९३७, ४३, ४५, ४८ )—कम्धातोः 'कमेर्णिङ्' इति णिङि अनुबन्धलोपे 'अत उपधायाः' इति वृद्धौ 'कामि' इति भूते 'सनाद्यन्ता धातवः' इति धातुत्वाल्लुङि तत्स्थाने प्रथमपुरुषैकवचने तादेशे 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे 'च्लि लुङि' इति च्लौ 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति च्लेश्चङि अनुबन्धलोपे 'अकामि अ त' इति स्थिते 'णेरनिटि' इति णिलोपे 'णौ चङ्युपधाया ह्रस्वः' इति प्रत्ययलक्षणेन णेश्चङ्परत्वादुपधाया ह्रस्वत्वे 'चङि' इति द्वित्वे 'पूर्वोऽभ्यासः इत्यभ्याससंज्ञायाम् 'हलादिः शेषः' इत्यभ्याससम्बन्धिनो मस्य लोपे 'कुहोश्चुः' इत्यभ्यासकवर्गस्य चुत्वे अचकमत' इति भूते 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इति सन्वद्भावे 'सन्यतः' इत्यभ्यासस्य इत्वे 'दीर्घो लघोः' इत्यभ्यासेकारस्य दीर्घे 'अचीकमत' इति सिद्धम् ।

**अचकमत** ( १९२४ )—'आयादय आर्धधातुके वा' इति णिङभावपक्षे कम्धातोर्लुङि तत्स्थाने तादेशे अडागमे अनुबन्धलोपे मध्ये च्लौ 'कमेश्च्लेश्चङ् वाच्यः' इति च्लेश्चङि अनुबन्धलोपे चङि' इति द्वित्वे अभ्याससंज्ञायाम् अभ्यासमकारस्य लोपे 'कुहोश्चुः' इति चुत्वे 'अचकमत' इति सिद्धम् ।

**अद्युतत्** ( १९४२, ४३ )—द्युत्धातोर्लुङि तत्स्थाने प्रथमपुरुषैकवचनविवक्षायां 'द्युद्भ्यो लुङि' इति विभाषया परस्मैपदसंज्ञकतिपि अनुबन्धलोपे 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे 'च्लि लुङि' इति च्लौ 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' इति च्लेरङि अनुबन्धलोपे 'अद्युत् अ ति' इति स्थिते 'इतश्च' इति तिप इकारलोपे ङित्वात् गुणनिषेधे 'अद्युतत्' इति ।

**अद्योतिष्ट**—'द्युद्भ्यो लुङि' इति विकल्पपक्षे द्युत्धातोर्लुङि तत्स्थाने आत्मनेपदे तप्रत्यये 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे 'च्लि लुङि' इति च्लौ 'च्लेः सिच्' इति सिचि इचि गते सिचः सस्यार्धधातुकत्वाद् 'आर्धधातुकस्येड्वलादेः' इति इटि अनुबन्धलोपे 'पुगन्तलघूपधस्य च' इति गुणे 'आदेशप्रत्यययोः' इति षत्वे ष्टुत्वे अद्योतिष्ट' इति ।

**द्युत्धातोर्लुङिरूपाणि** ( १९५२ )—

| परस्मैपदे— | | | आत्मनेपदे— | | |
|---|---|---|---|---|---|
| अद्युतत् | अद्युतताम् | अद्युतन् । | अद्योतिष्ट | अद्योतिषाताम् | अद्योतिषत |
| अद्युतः | अद्युततम् | अद्युतत । | अद्योतिष्ठाः | अद्योतिषाथाम् | अद्योतिध्वम् |
| अद्युतम् | अद्युताव | अद्युताम् । | अद्योतिषि | अद्योतिष्वहि | अद्योतिष्महि |

**वर्त्स्यति** ( १९४३ )—वृत्धातोर्लृटि 'वृद्भ्यः स्यसनोः' इति विभाषया परस्मैपदे तिपि अनुबन्धलोपे 'स्यतासीलृलुटोः' इति स्यप्रत्यये स्यस्यार्धधातुकत्वे 'आर्धधातुकस्येड्वलादेः' इति इटि प्राप्ते 'न वृद्भ्यश्चतुर्भ्यः' इति निषेधे 'पुगन्तलघूपधस्य च' इति गुणे 'उरण् रपरः' इति रपरे 'वर्त्स्यति' इति । पक्षे 'वर्तिष्यते' इति भवति ।

**त्रेपे** ( १९५० )—त्रप्धातोर्लिटि तत्स्थाने तप्रत्यये 'लिटस्तझयोरेशिरेच्' इति एशि अनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्याससंज्ञायां 'तॄफलभजत्रपश्च' इति त्रपः अकारस्य एत्वे अभ्यासलोपे च कृते 'त्रेपे' इति सिद्धम् ।

**अशिश्रियत्**—श्रिधातोर्लुङि तिपि अडागमे अनुबन्धलोपे 'च्लि लुङि' इति च्लौ 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति च्लेश्चङि अनुबन्धलोपे 'चङि' इति द्वित्वे अभ्याससंज्ञायां 'हलादि शेषः' इति अभ्याससम्बन्धिनो रेफस्य लोपे 'अ शिश्रि अ ति'

इति जाते 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' इति इयङि 'इतश्च' इति तिप इकार लोपे 'अशिश्रियत्' इति सिद्धम् ।

**भ्रियात्**—भृधातोराशीर्लिङि तिपि यासुटि अनुबन्धलोपे यासुटः कित्वाद् गुणाभावे 'रिङ्शयग्लिङ्क्षु' इति ऋतो रिङादेशे अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे 'स्कोः संयोगाद्योरन्ते च' इति सलोपे 'भ्रियात्' इति जातम् । नचाऽत्र ऋतो रिङि कृते 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घः कुतोनेति वाच्यम्, 'रीङृतः' इत्येव दीर्घे सिद्धे 'रिङ्' इति ह्रस्वविधानस्य वैयर्थ्यापत्तेः । तस्मादत्र रिङि कृते न दीर्घः इत्यवसेयम् ।

**जहार** ( १९२५ )—हृधातोर्लिटि तिपि तिपो णलि द्वित्वे अभ्यासत्वे 'उरत्' इत्यभ्यासऋवर्णस्य अत्वे रपरत्वे 'हलादिः शेषः' इत्यभ्यासरेफस्य लोपे 'कुहोश्चुः' इति अभ्याससम्बन्धिनो हस्य चुत्वे 'अभ्यासे चर्च' इति झस्य जश्त्वे 'जह अ' इति स्थिते 'अचोञ्णिति' इति वृद्धौ रपरत्वे च 'जहार' इति सिद्धम् ।

**भेजे** ( १९२८ )—भज्धातोर्लिटि तत्स्थाने आत्मनेपदे तप्रत्यये 'लिटस्तझयोरेशिरेच्' इति एशि अनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्यासत्वे 'त्रिफलभजत्रपश्च' इत्येत्वे अभ्यासलोपे च विहिते उक्तं रूपं सिद्धम् ।

**अभाक्षीत्** ( १९४३ )—भज्धातोर्लुङि प्रथमपुरुषैकवचने तिपि अनुबन्धलोपे 'लुङ्लङ्' इत्यडागमे 'च्लि लुङि' इति च्लौ सिचि इचि गते सिचः सस्यार्धधातुकत्वादिटि प्राप्ते 'एकाच उपदेशेऽनुदात्तात्' इति निषेधे 'इतश्च' इति तिप इकारलोपे 'अभज् स त्' इति स्थिते तकारस्यापृक्तत्वात् 'अस्ति सिचोऽपृक्ते' इत्यनेन ईटि 'वदव्रजहलन्तस्याचः' इति वृद्धौ जकारस्य कुत्वे चर्त्वे 'आदेशप्रत्यययोः' इति षत्वे 'अभाक्षीत्' इति सिद्धं रूपं भवति ।

**इयाज** ( १९४१ )—'यज्' धातोर्लिटि तिपि णलि अनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्यासत्वे 'हलादिः शेषः' इत्यनेन अभ्यासयकारस्य लोपे 'य यज् अ' इति स्थिते 'लिट्यभ्यासस्योभयेषाम्' इति अभ्यासयकारस्य सम्प्रसारणेन इकारे जाते 'सम्प्रसारणाच्च' इति पूर्वरूपे 'अत उपधायाः' इति वृद्धौ 'इयाज' इति ।

**ईजतुः** ( १९४२ )—यज्धातोर्लिटि तसि तसोऽतुसादेशे सति द्वित्वे प्राप्ते 'सम्प्रसारणं तदाश्रयं च कार्यं बलवत्' इति न्यायात् द्वित्वात् प्राक् 'असंयोगाल्लिट

कित्' इत्युसः कित्त्वेन 'वचिस्वपियजादीनां किति' इति यजो यकारस्य सम्प्रसारणे 'सम्प्रसारणाच्च' इति पूर्वरूपे 'इज् अतुस्' इति स्थिते 'पुनः प्रसङ्गविज्ञानात् सिद्धम्' इति न्यायेन 'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्याससंज्ञायां 'हलादिः शेषः' इति अभ्यासजकारस्य लोपे 'इ इज् अतुस्' इति स्थिते सवर्णदीर्घे सकारस्य रुत्वे विसर्गे 'ईजतुः' इति सिद्धम् ।

**यज्धातोर्लुटि रूपाणि ( १६५२ )–**

| परस्मैपदे— | | | आत्मनेपदे– | | |
|---|---|---|---|---|---|
| यष्टा | यष्टारौ | यष्टारः | यष्टा | यष्टारौ | यष्टारः |
| यष्टासि | यष्टास्थः | यष्टास्थ | यष्टासे | यष्टासाथे | यष्टाध्वे |
| यष्टास्मि | यष्टास्वः | यष्टास्मः | यष्टाहे | यष्टास्वहे | यष्टास्महे |

**अयाक्षीत्** ( १९४९ )—'यज् देवपूजासंगतिकरणदानेषु' इत्यस्माद् धातोर्लुङि प्रथमपुरुषैकवचने तिपि 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे–च्लौ च्लेः सिचि इचि गते सिचः सस्यार्धधातुकत्वात् 'एकाच उपदेशेऽनुदात्तात्' इतीट्निषेधे 'इतश्च' इति तिप इकारलोपे तकारस्यापृक्तत्वात् 'अस्ति सिचोऽपृक्ते' इति ईटि 'अयज् स् ई त्' इति स्थिते 'वदव्रजहलन्तस्याचः' इति वृद्धौ 'व्रश्चभ्रस्जसृजमृज' इति जस्य षत्वे 'षढोः कः सि' इति षस्य कत्वे कात्परत्वात् सिचः सकारस्य 'आदेशप्रत्यययोः' इति षत्वे 'अयाक्षीत्' इति । आत्मनेपदे तु 'अयष्ट' इति भवति ।

**उवोढ** ( १९२२, ४३ ) वह्धातोर्लिटि सिपि सिपो थलि अनुबन्धलोपे 'एकाच उपदेशेऽनुदात्तात्' इति इडभावे प्राप्तेऽपि क्रादिनियमान्नित्ये प्राप्ते 'उपदेशेऽत्वतः' इति तन्निषेधे थलः पित्वात् 'असंयोगाल्लिट् कित्' इत्यस्याप्राप्त्या कित्वाऽभावेन 'वचिस्वपी'ति सम्प्रसारणाऽभावे 'लिटि धातोरनभ्यासस्य' इत्यनेन द्वित्वे अभ्याससंज्ञायां 'लिट्यभ्यासस्योभयेषाम्' इति अभ्यासवकारस्य सम्प्रसारणे 'सम्प्रसारणाच्च' इति पूर्वरूपे 'हलादिः शेषः' इति अभ्याससम्बन्धिहकारस्य लोपे 'उ वह् थ' इति स्थिते 'हो ढः' इति हस्य ढत्वे 'झषस्तथोर्धोऽधः' इसि थस्य धत्वे 'ष्टुना ष्टुः' इति धस्य ष्टुत्वेन ढत्वे 'ढो ढे लोपः' इति पूर्वढकारस्य लोपे 'ढ्लोपे पूर्वस्य दीर्घोऽणः' इति दीर्घे प्राप्ते तत्प्रबाध्य 'सहिवहोरोदवर्णस्य' इत्यकारस्य ओत्वे 'उवोढ' इति सिद्धम् ।

**अवाक्षीत्** ( १९४३, ४६ )—वह्धातोर्लुङि प्रथमपुरुषैकवचने तिपि अडागमे

अनुबन्धलोपे च्लौ सिचि इचि गते 'इतश्च' इति तिप इकारलोपे तस्यापृक्तत्वात् 'अस्तिसिचोऽपृक्ते' इति ईटि 'अवह् स् ई त्' इति स्थिते 'वदव्रजहलन्तस्याचः' इति वृद्धौ 'हो ढः' इति हस्य ढत्वे 'षढोः कः सि' इति ढस्य कत्वे 'आदेशप्रत्यययोः' इति सिचः सस्य षत्वे 'अवाक्षीत्' इति रूपं भवति। आत्मनेपदे 'अवोढ' इति भवति।

**अवोढ**—वह्धातोरात्मनेपदपक्षे लुङि तत्स्थाने ते अडागमे च्लौ सिचि इचि गते 'अवह् स् त' इति स्थिते 'हो ढः' इति ढत्वे 'झलो झलि' इति सिचः सस्य लोपे 'झषस्तथोर्धोऽधः' इति तस्य धत्वे धस्य ष्टुत्वे 'ढो ढे लोपः' इति ढलोपे 'सहिवहो-रोदवर्णस्य' इति अकारस्यौत्वे 'अवोढ' इति सिद्धं भवति।

इति सोत्तरायां प्रश्नावल्यां भ्वादिप्रकरणम्।



# अथ अदादिप्रकरणम्

**जघास** (१९३२, ४१)—अद्धातोर्लिटि तिपि णलि अनुबन्धलोपे 'लिट्य-न्यतरस्याम्' इति अदो 'घस्लृ' आदेशे अनुबन्धलोपे 'घस् अ' इति स्थिते 'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्याससंज्ञायां 'हलादिः शेषः' इति अभ्याससकारस्य लोपे 'कुहोश्चुः' इति घस्य झत्वे 'अभ्यासे चर्च' इति झस्य जत्वे 'अत उपधायाः' इति घकाराकारस्य वृद्धौ 'जघास' इति, घस्लादेशाऽभावपक्षे 'आद' इति भवति।

**आद**—घस्लादेशाऽभावपक्षे अद्धातोर्लिटि तिपि णलि द्वित्वे अभ्याससंज्ञायां 'हलादिः शेषः' इत्युपधादकारस्य लोपे 'अ अद् अ' इति जाते 'अत आदेः' इत्या-द्यकारस्य दीर्घे 'अत उपधायाः' इति वृद्धौ 'आ आद् अ' इति स्थिते सवर्णदीर्घे 'आद' इति सिद्धम्।

**जक्षतुः** (१९३०, ४३)—अद्धातोर्लिटि तत्स्थाने तसि 'परस्मैपदानाम्' इति तसोऽतुसि 'लिट्यन्यतरस्याम्' इति अदो 'घस्लृ' आदेशे अनुबन्धलोपे 'घस् अतुस्' इति स्थिते 'लिटि धातोरनभ्यासस्य' इति द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्याससंज्ञायां 'हलादिः शेषः' इत्यनेन अभ्याससकारस्य लोपे 'कुहोश्चुः' इति घस्य झत्वे 'अभ्यासे चर्च' इति झस्य जत्वे 'जघस् अतुस्' इति स्थिते 'असंयोगाल्लिट् कित्' इति अतुसः कित्वे 'गमहनजनखनघसां लोपः क्ङित्यनङि' इति उपधाऽकारस्य लोपे

'जघ्स् अतुस्' इति दशायां 'खरि च' इति घस्य चर्त्वेन ककारे 'शासिवसिघसीनां च' इति सस्य षत्वे अतुसः सकारस्य रुत्वे विसर्गे 'जक्षतुः' इति, घस्लादेशाऽभावे तु 'आदतुः' इति भवति ।

**आदतुः**—घस्लादेशाऽभावपक्षे अद्धातोर्लिटि तसि अतुसि द्वित्वे अभ्याससंज्ञायां 'हलादिः शेषः' इति दलोपे 'अ अद् अतुस्' इति जाते 'अत आदेः' इत्यभ्यासाऽकारस्य दीर्घे 'अत उपधायाः' इति उपधाऽकारस्य वृद्धौ 'आ आद् अतुस्' इति स्थिते सवर्णदीर्घे सकारस्य रुत्वे विसर्गे 'आदतुः' इति सिद्धम् ।

**जघसिथ** ( १९२९ ) अद्धातोर्लिटि सिपि थलि अनुबन्धलोपे 'लिट्यन्यतरस्याम्' इति अदो घस्लादेशे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्याससंज्ञायां 'हलादिः शेषः' इत्युपधासकारस्य लोपे 'कुहोश्चुः' इत्युपधाघकारस्य झत्वे 'अभ्यासे चर्च' इति झस्य जत्वे 'जघस् थ' इति स्थिते 'ऋतो भारद्वाजस्य' इति इटि अनुबन्धलोपे 'जघसिथ' इति, घस्लादेशाऽभावे 'आदिथ' इति ।

**आदिथ** (१९२६ )—घस्लादेशाऽभावपक्षे 'अद्' धातोर्लिटि सिपि थलि अनुबन्धलोपे द्वित्वे अभ्याससंज्ञायां 'हलादिः शेषः' इति उपधादकारस्य लोपे 'अ अद् थ' इति जाते 'अत आदेः' इति अभ्यासाऽकारस्य दीर्घे थलो ङित्वाद् 'अत उपधायाः' इति वृद्धौ 'आ आद् थ' इति भूते सवर्णदीर्घे 'इडत्त्यर्तिव्ययतीनाम्' इति नित्ये इटि अनुबन्धलोपे 'आदिथ' इति सिद्धम् ।

**आदत्** ( १९२४ )—अद्धातोर्लङि तिपि अनुबन्धलोपे 'अदिप्रभृतिभ्यः शपः' इति शपो लुकि 'आडजादीनाम्' इत्यङ्गस्याऽडागमे अनुबन्धलोपे 'आटश्च' इति वृद्धौ 'इतश्च' इति तिप इकारलोपे 'अपृक्त एकाल्प्रत्ययः' इति तिपस्तकारस्याऽपृक्तसंज्ञायाम् 'अदः सर्वेषाम्' इत्यनेन अपृक्तसंज्ञकस्य तिपस्तकारस्याडागमे अनुबन्धलोपे 'आदत्' इति सिद्धम् ।

**जघ्नतुः** ( १९२५ )—हन्धातोर्लिटस्तसि तसोऽतुसि 'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्याससंज्ञायां 'हलादिः शेषः' इति अभ्यासनकारस्य लोपे 'कुहोश्चुः' इत्यनेन अभ्यासहकारस्य चुत्वेन झकारे 'अभ्यासे चर्च' इति झस्य जकारे 'ज हन् अतुस्' इति स्थिते 'असंयोगाल्लिट्कित्' इति अतुसः कित्त्वात् 'गमहनजनखनघसां लोपः क्ङित्यनङि' इति हन उपधाकारस्य लोपे 'हो हन्तेर्ञ्णिन्नेषु' इति हनो हस्य कुत्वेन घत्वे सस्य रुत्वे विसर्गे तत्सिद्धिः ।

**जघनिथ** ( १९२९, ३५ )—हन्धातोर्लिटः सिपि सिपः स्थाने 'परस्मैपदानाम्' इति थलि अनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्याससंज्ञायां 'हलादिः शेषः' इत्यभ्यासनकारस्य लोपे 'कुहोश्चुः' इति चुत्वेन हस्य झत्वे 'अभ्यासे चर्च' इति झस्य जत्वे 'ज हन् थ' इति स्थिते 'लिट् च' इति थल आर्धधातुकत्वेन भारद्वाजनियमादिड्विकल्पे 'ज हन् इ थ' इति दशायाम् ञ्णित्प्रत्ययपरत्वाऽभावान्नकारपरत्वाभावाच्च 'हो हन्तेर्ञ्णिन्नेषु' इति सूत्राऽप्राप्तया 'अभ्यासाच्च' इति हस्य कुत्वेन घत्वे 'जघनिथ' इति। इडभावे 'जघन्थ' इति पूर्ववत् सिद्धं बोध्यम्।

**हन्तेर्जः** ( १९४७ )—'हन्' के स्थानमें 'ज' आदेश हो 'हि' के परे।

**असिद्धवदत्राऽऽभात्** ( १९४४ )—इत ऊर्ध्वमापादपरिसमाप्तेराभीयम्। समानाश्रये तस्मिन् कर्तव्ये तदसिद्धं स्यात्। 'असिद्धवदत्राभात् ( ६।४।२॥ ) इस सूत्रसे लेकर षष्ठ अध्यायके चतुर्थ पादकी समाप्ति पर्यन्त सभी सूत्र 'आभीय' कहलाते हैं। समानाश्रय आभीय कार्यके करनेमें कृत समानाश्रय आभीय कार्य असिद्ध हो। यही इस सूत्रका भाषार्थ हुआ। उदाहरण जैसे 'जहि' यहां जकारके असिद्ध होनेसे अकारके परे 'हि' का 'अतो हेः' से लोप नहीं हुआ।

**जहि** ( १९२२, २८, ३९ ) हन्धातोर्लोटि तत्स्थाने सिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि 'अदिप्रभृतिभ्यः शपः' इति शपो लुकि 'सेर्ह्यपिच्च' इति सिपः सस्य हौ 'हन् हि' इति जाते 'हन्तेर्जः' इति हनः स्थाने जादेशे 'जहि' इति। अत्र जादेशे कृते 'अतो हेः' इति अतः परस्य हेर्लुक् तु न भवति, 'असिद्धवदत्राभात्' इत्यनेन जादेशस्यासिद्धत्वात्।

**अहत** ( १९३६ )—हन्धातोर्लङि तत्स्थाने मध्यमपुरुषबहुवचने थप्रत्यये सार्वधातुकसंज्ञायां शपि 'अदिप्रभृतिभ्यः शपः' इति शपो लुकि 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे 'अहन् थ' इति जाते 'तस्थस्थमिपां तान्तन्तामः' इति थस्य तादेशे 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' इति हनो नस्य लोपे 'अहत' इति सिद्धम्।

**अवधीत्** ( १९४८ )—हन्धातोर्लङि 'लुङि च' इति हनो वधादेशे लुङः स्थाने तिपि 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे 'च्लि लुङि' इति च्लौ 'च्लेः सिच्' इति सिचि इचि गते 'अवध स् त्' इति जाते सिचः सस्यार्धधातुकत्वात् 'आर्धधातुकस्येड्वलादेः' इति इटि 'अतो लोपः' इति बधाकार-

स्य लोपे 'अवध् इ स त्' इति स्थिते 'अस्तिसिचोऽपृक्ते' इति अपृक्ततकारस्य ईटि 'इट ईटि' इति सलोपे 'सिज्लोप एकादेशे सिद्धो वाच्यः' इति सिज्लोपस्य सिद्धत्वात् 'सवर्णदीर्घे 'अवधीत्' इति सिद्धम् ।

हन्धातोः सर्वलकारेषु प्रथमं रूपम् ( १९४० )—

लटि—हन्ति हतः घ्नन्ति । लिटि—जघान जघ्नतुः जघ्नुः ।
लुटि—हन्ता हन्तारौ हन्तारः । लृटि, हनिष्यति हनिष्यतः हनिष्यन्ति ।
लोटि—हन्तु-हतात् हताम् घ्नन्तु । लङि—अहन् अहताम् अघ्नन् ।
वि० लिङि—हन्यात् हन्याताम् हन्युः । आ० लिङि, वध्यात् वध्यास्ताम् वध्यासुः ।
लुङि, अवधीत् अवधिष्टाम् अवधिषुः । लृङि, अहनिष्यत् अहनिष्यताम् अहनिष्यन् ।

अयुः—याधातोर्लङि तत्स्थाने झौ सार्वधातुकसंज्ञायां शपि 'अदिप्रभृतिभ्यः शपः' इति शपो लुकि 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे 'अ या झि' इति स्थिते 'लङः शाकटायनस्यैव' इति झेर्जुसि अनुबन्धलोपे 'उस्यपदान्तात्' इति पररूपे सस्य रुत्वे विसर्गे 'अयुः' इति सिद्धम् । जुसोऽभावे झस्यान्तादेशे इकारलोपे तलोपे च कृते सवर्णदीर्घे 'अयान्' इति सिद्धं भवति ।

वेद—विद्धातोर्लटि तिपि 'विदो लटो वा' इति तिपो णलि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि 'अदिप्रभृतिभ्यः शपः' इति शपो लुकि 'पुगन्तलघूपधस्य च' इति गुणे 'वेद' इति सिद्धम् ।

विदाञ्चकार ( १९४८ )—विद्धातोर्लिटि 'उषविदजागृभ्योऽन्यतरस्याम्' इत्यामि 'विद् आम् लिट्' इति स्थिते आमः आर्धधातुकत्वेऽपि विदेरदन्तत्वप्रतिज्ञानात् लघूपधगुणाऽभावे 'आमः' इति लिटो लुकि 'कृञ्चानुप्रयुज्यते लिटि' इति लिट्परककृञोऽनुप्रयोगे 'विदाम् कृ लिट्' इति स्थिते लिटः स्थाने तिपि तिपो णलि अनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्याससंज्ञायाम् 'उरत्' इत्यभ्यासऋवर्णस्य अत्वे रपरत्वे 'हलादिः शेषः' इति अभ्यासरेफस्य लोपे 'विदाम् क कृ अ' इति जाते 'कुहोश्चुः' इति अभ्यासककारस्य चुत्वेन चकारे 'विदाम् च कृ अ' इति स्थिते 'अचोञ्णिति' इति वृद्धौ रपरत्वे आमो मकारस्य अनुस्वारे परसवर्णे च कृते 'विदाञ्चकार' इति सिद्धम् । आमोऽभावपक्षे 'विवेद' इति ।

**विवेद**—विद्धातोर्लिटि तिपि णलि अनुबन्धलोपे 'लिटि धातोरि'ति द्वित्वे अभ्याससंज्ञायां 'हलादिः शेषे' च विहिते 'लिट् च' इति णलोऽकारस्य आर्धधातुकत्वात् 'पुगन्तलघूपधस्य च' इति गुणे 'विवेद' इति जातम् ।

**विदाङ्करोतु** ( १९३३, ४५ )—विद्धातोर्लोटि 'विदाङ्कुर्वन्त्वित्यन्यतरस्याम्' इति आमि गुणाऽभावे लोटो लुकि लोट्परक कृञोऽनुप्रयोगे च निपातिते 'विदाम् कृ लोट्' इति स्थिते लोटः स्थाने तिपि अनुबन्धलोपे तिपः सार्वधातुकत्वात् शपि प्राप्ते तम्प्रबाध्य 'तनादि कृञ्भ्य उः' इत्युत्वे 'विदाम् कृ उ ति' इति जाते 'आर्धधातुकं शेषः' इत्युकारस्यार्धधातुकत्वे 'सार्वधातुकार्धधातुकयोः' इति गुणे रपरत्वे च विहिते 'विदाम् कर् उ ति' इति स्थिते तिपो निमित्तमादाय पुनः उकारस्य गुणे 'एरुः' इति तिप इकारस्य उत्वे मस्यानुस्वारे परसवर्णे च कृते 'विदाङ्करोतु' इति सिद्धम् । तातङि पक्षे 'विदाङ्कुरुतात्' इति ।

**विदाङ्कुरुतात्**—विद्धातोर्लोटि 'विदाङ्कुर्वन्त्वित्यन्यतरस्याम्' इति आमि गुणाभावे लोटो लुकि लोट्परक कृञोऽनुप्रयोगे च निपातिते 'विदाम् कृ लोट्' इति जाते लोटस्तिपि अनुबन्धलोपे 'एरुः' इत्युत्वे 'तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्' इति तातङि अनुबन्धलोपे शपं बाधित्वा 'तनादिकृञ्भ्य उः' इत्युप्रत्यये तस्यार्धधातुकत्वात् 'सार्वधातुकार्धधातुकयोः' इति गुणे रपरत्वे च कृते 'अत उत्सार्वधातुके' इति ककाराकारस्य उत्वे मस्यानुस्वारे परसवर्णे च कृते 'विदाङ्कुरुतात्' इति । 'विदाङ्कुर्वन्त्वित्यन्यतरस्याम्' इति विकल्पपक्षे 'वेत्तु' इति ।

**वेत्तु**—विद्धातोर्लोटि तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि 'अदिप्रभृतिभ्यः शपः' इति शपो लुकि 'विद् ति' इति स्थिते गुणे दस्य चर्त्वे 'एरुः' इति तिप इकारस्य उत्वे 'वेत्तु' इति सिद्धम् ।

**विदाङ्कुर्वन्तु** ( १९२३ )—विद्धातोर्लोटि 'विदाङ्कुर्वन्त्वित्यन्यतरस्याम्' इत्यामि गुणाभावे लोटो लुकि लोडन्तकृञोऽनुप्रयोगे च निपातिते 'विद् आम् लोट्' इति स्थिते लोटः स्थाने झौ 'विदाम् कृ झि' इति जाते सार्वधातुकसंज्ञायां शपि प्राप्ते तम्प्रबाध्य 'तनादिकृञ्भ्य उः' इत्युप्रत्यये 'विदाम् कृ उ झि' इति दशायां उप्रत्ययस्यार्धधातुकत्वात् 'सार्वधातुकार्धधातुकयोः' इति गुणे रपरे च कृते 'विदाम् कर् उ झि' इति जाते 'झोऽन्तः' इत्यनेन झस्याऽन्तादेशे 'अत उत्सार्वधातुके' इति ककाराकारस्य उत्वे मस्यानुस्वारे परसवर्णे 'एरुः' इत्युत्वे 'इको यणचि' इति यणि

'विदाङ्कुर्वन्तु' इति। 'विदाङ्कुर्वन्त्वित्यन्यतरस्याम्' इति विकल्पपक्षे 'विदन्तु' इति च भवति।

**निष्यात्**—"'नि' उपसर्गात् 'अस्' धातोर्लिङि तिपि अनुबन्धलोपे यासुटि अनुबन्धलोपे 'नि अस् यास् ति' इति स्थिते यासुटः कित्वेन तस्मिन् परे 'श्नसोरल्लोपः' इत्यल्लोपे 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' इति धातोः सस्य षत्वे 'इतश्च' इति तिप इकारलोपे 'स्कोः संयोगाद्योरन्ते च' इति सलोपे 'निष्यात्' इति सिद्धम्।

**एधि**—अस्धातोर्लोटि सिपि 'सेर्ह्यपिच्च' इति सिपः स्थाने हेरादेशे 'अस् हि' इति जाते 'घ्वसोरेद्धावभ्यासलोपश्च' इति सस्य एत्वे एत्वस्याऽसिद्धत्वात् 'हुझल्भ्यो हेर्धिः' इति हेर्धौ 'श्नसोरल्लोपः' इत्यल्लोपे 'एधि' इति सिद्धम्। तातङ्पक्षे परेण तातङा बाधादेत्वाऽभावे 'स्तात्' इति सिद्धं रूपं भवति।

**ईयतुः**—णकारेत्संज्ञक 'इण्'धातोर्लिटि तसि तसोऽतुसि 'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्यासत्वे 'इ इ अतुस्' इति स्थिते 'इणो यण्' इति यणि 'दीर्घ इणः किति' इत्यभ्यासस्य दीर्घे सकारस्य रुत्वे विसर्गे 'ईयतुः' इति सिद्धम्।

**अगात्**—इण्धातोर्लुङि 'इणो गा लुङि' इति इणो गादेशे कृते लुङः स्थाने तिपि अनुबन्धलोपे 'लुङ्लङ्' इत्यडागमे मध्ये च्लौ तस्य सिचि 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु' इति सिचो लोपे 'इतश्च' इति तिप इकारलोपे 'अगात्' इति जातम्।

**अशयिष्ट** ( १९३७, ४६ )—शीङ्धातोर्लुङः प्रथमैकवचने आत्मनेपदे ते 'लुङ्लङ्' इत्यडागमे च्लौ च्लेः सिचि इचि गते 'आर्धधातुकस्येड्वलादेः' इति इटि अनुबन्धलोपे 'सार्वधातुकार्धधातुकयोः' इति गुणे अयादेशे सिचः सस्य षत्वे ष्टुत्वे 'अशयिष्ट' इति सिद्धं भवति।

**अधिजगे** ( १९४२ )—अधिपूर्वक 'इङ्' धातोर्लिटि 'गाङ् लिटि' इति इङो गाङादेशे अनुबन्धलोपे लिटः स्थाने ते 'लिटस्तझयोरेशिरेच्' इति तस्य एशि अनुबन्धलोपे 'अधि गा ए' इति स्थिते 'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्याससंज्ञायां ह्रस्वे 'कुहोश्चुः' इति चुत्वे 'आतो लोप इटि च' इत्यालोपे 'अधिजगे' इति सिद्धम्।

**अध्ययै** ( १९४०- )—इङ्धातोर्लोटि उत्तमपुरुषैकवचने इटि शपि 'अदिप्रभृ-

भ्यः शपः' इति शपो लुकि 'टित आत्मनेपदानां टेरे' इति टेरेत्वे 'एत ऐ' इति एकारस्य ऐकारे 'अधि इ ऐ' इति जाते 'आडुत्तमस्य पिच्च' इत्यादि 'आटश्च' इति वृद्धौ पित्वात् पूर्वस्य इकारस्य गुणे अयादेशे 'अधि अय् ऐ' इति जाते इकारस्य यणि 'अध्ययै' इति सिद्धम् ।

**अध्यगीष्ट** ( १९-४०, ५० )—अधिपूर्वकादिङ्धातोर्लुङि तप्रत्यये 'विभाषा लुङ्लृङोः' इति इङो गाङादेशे 'लुङ् लङ्' इत्यडागमे अनुबन्धलोपे 'अधि अ गा त' इति स्थिते च्लौ च्लेः सिचि इचि गते 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' इति सिचो ङित्वे 'घुमास्थागापाजहातिसां हलि' इति आकारस्य ईत्वे यणि सिचः सस्य षत्वे ष्टुत्वे 'अध्यगीष्ट' इति । गाङोऽभावे आटि वृद्धौ पूर्वोक्तकार्ये च सम्पन्ने 'अध्यैष्ट' इति भवति ।

**दुग्धः** ( १९५२ ) दुह्धातोर्लटि तत्स्थाने तसि सार्वधातुकसंज्ञायां शपि 'अदिप्रभृतिभ्यः शपः' इति शपो लुकि 'दादेर्धातोर्घः' इति हस्य घत्वे 'झषस्तथोर्धोऽधः' इति तस्य धत्वे 'झलां जश् झशि' इति घस्य जश्त्वेन गत्वे तसः अपित्वेन ङित्वात् 'क्ङिति चे' ति गुणनिषेधे सस्य रुत्वे विसर्गे 'दुग्धः' इति ।

**अधोक्**—दुह्धातोर्लङस्तिपि अनुबन्धलोपे शपो लुकि अङ्गस्याडागमे 'पुगन्तलघूपधस्य च' इति गुणे 'इतश्च' इति तिप इकारलोपे 'हल्ङ्याब्भ्यः' इति तलोपे 'अदोह्' इति जाते 'दादेर्धातोर्घः' इति हस्य घत्वे 'एकाचो बशो भष्झषन्तस्य स्ध्वोः' इति दस्य धत्वे घस्य जश्त्वे तस्य चर्त्वेन ककारे 'अधोक्' इति सिद्धम् ।

**धुक्षीष्ट** ( १९२४ )—दुह्धातोराशीर्लिङि तत्स्थाने ते 'लिङ्सिचावात्मनेपदेषु' इति कित्वाद् गुणाऽभावे 'लिङः सीयुट्' इति सीयुटि अनुबन्धलोपे 'लोपो व्योर्वलि' इति यलोपे 'दादेर्धातोर्घः' इति हस्य घत्वे 'एकाचो बशो भष्झषन्तस्य स्ध्वोः' इति भष्भावेन दस्य धत्वे घस्य जश्त्वे चर्त्वे 'आदेशप्रत्यययोः' इति सस्य षत्वे 'धुक्षी त' इति जाते 'सुट् तिथोः', इति सुटि अनुबन्धलोपे सस्य षत्वे ष्टुत्वे च कृते 'धुक्षीष्ट' इति ।

**अधुक्षत्** ( १९२८ )—दुह्धातोर्लुङि तिपि अडागमे अनुबन्धलोपे मध्ये च्लौ तस्य सिचादेशं प्रबाध्य 'शल इगुपधादनिटः क्सः' इति क्सादेशे अनुबन्धलोपे 'अदुह् स ति' इति जाते 'इतश्च' इति इकारलोपे 'दादेर्धातोर्घः' इति हस्य घत्वे

'एकाचो बशः' इति दस्य धत्वे 'अ धु घ् स त्' इति जाते घस्य जश्त्वे चर्त्वे सस्य षत्वे 'अधुक्षत्' इति सम्पन्नम् ।

अधुक्षाताम् (१९३१)—दुह्धातोर्लुङि आतामि अडागमे अनुबन्धलोपे च्लौ तस्य सिचादेशं बाधित्वा 'शल इगुपधादनिटः क्सः' इति क्सादेशे अनुबन्धलोपे 'अदुह् स आताम्' इति स्थिते 'क्सस्याचि' इत्यनेन 'अलोन्त्यस्ये'ति सहकारात् सस्याऽकारस्य लोपे 'अदुह् स् आताम्' इति जाते 'दादेर्धातोर्घः' इत्यनेन हस्य घत्वे 'एकाचः' इत्यनेन दस्य भष्भावेन धत्वे 'खरि च' इत्यनेन घस्य चर्त्वे 'अधुक् स् आताम्' इति स्थिते 'आदेशप्रत्यययोः' इत्यनेन सस्य षत्वे क्सस्य कित्वाद् गुणाऽभावे 'अधुक्षाताम्' इति जातम् ।

'दुह्' धातोर्लिटि रूपाणि (१९३९)—

| परस्मैपदे— | | | | आत्मनेपदे— | | |
|---|---|---|---|---|---|---|
| दुदोह | दुदुहतुः | दुदुहुः | । | दुदुहे | दुदुहाते | दुदुहिरे |
| दुदोहिथ / दुदोग्ध | दुदुहथुः | दुदुह | । | दुदुहिषे | दुदुहाथे | दुदुहिढ्वे / दुदुहिध्वे |
| दुदोह | दुदुहिव | दुदुहिम | । | दुदुहे | दुदुहिवहे | दुदुहिमहे |

आह—ब्रूधातोर्लटि तिपि शपि शपो लुकि 'ब्रुवः पञ्चानामादित आहो ब्रुवः' इति तिपो णलि ब्रुवः आहादेशे च कृते अनुबन्धलोपे 'आह' इति सिद्धम् ।

उवचिथ—ब्रूधातोर्लिटः सिपि सिपस्थलादेशे थलः आर्धधातुकत्वात् 'ब्रुवो वचिः' इति ब्रुवो वचादेशे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्याससंज्ञायां 'हलादिः शेषः' इति अभ्यासवकारस्य लोपे 'लिट्यभ्यासस्योभयेषाम्' इत्यभ्यासस्य सम्प्रसारणे 'सम्प्रसारणाच्च' इति पूर्वरूपे थलः आर्धधातुकत्वादिटि प्राप्ते 'एकाच उपदेशेऽनुदात्तात्' इति निषेधे भारद्वाजनियमाद् विभाषया इटि अनुबन्धलोपे 'उवचिथ' इति । इडभावपक्षे 'चोः कुः' इति कुत्वे 'उवक्थ' इति भवति ।

ब्रूञ्धातोर्लिटि—

| परस्मैपदे— | | | | आत्मनेपदे— | | |
|---|---|---|---|---|---|---|
| उवाच | ऊचतुः | ऊचुः | । | ऊचे | ऊचाते | ऊचिरे |
| उवचिथ, उवक्थ | ऊचथुः | ऊच | । | ऊचिषे | ऊचाथे | ऊचिध्वे |
| उवाच-उवच | ऊचिव | ऊचिम | । | ऊचे | ऊचिवहे | ऊचिमहे |

**अवोचत्**, अवोचत ( १९२७, ४३ )—ब्रुवो लुङि तिपि अडागमे अनुबन्ध-लोपे 'च्लि लुङि' इति च्लौ 'अस्यतिवक्तिख्यातिभ्योऽङ्' इति च्लेरङि अनुबन्धलोपे 'ब्रुवो वचिः' इति वचादेशे 'अ वच् अ ति' इति स्थिते 'इतश्च' इति तिप इकारलोपे 'वच उम्' इति उमि अनुबन्धलोपे 'अव उ च् अ त्' इति दशायाम् 'आद्गुणः' इति गुणे 'अवोचत्' इति सिद्धम् । आत्मनेपदे 'अवोचत' इति बोध्यम् ।

**ऊर्णुनाव**—ऊर्णुधातोर्लिटस्तिपि तिपो णलि अनुबन्धलोपे 'ऊर्णु अ' इति स्थिते 'इजादेश्च गुरुमतोऽनृच्छः' इत्यामि प्राप्ते 'ऊर्णोतेराम्नेति वाच्यम्' इति निषेधे 'अजादेर्द्वितीयस्य' इति 'र्णु' शब्दस्य द्वित्वे प्राप्ते 'नन्द्राः संयोगादयः' इति रेफस्य द्वित्वाऽभावे णत्वस्याऽसिद्धत्वात् 'नु' शब्दस्य द्वित्वे 'रषाभ्यां नो णः समानपदे' इति प्रथमनकारस्य णत्वे 'ऊर्णु नु अ' इति जाते गुणं बाधित्वा नित्यत्वाद् 'अचोऽञ्णिति' इति वृद्धौ 'एचोऽयवायावः' इत्यावि 'ऊर्णुनाव' इति सिद्धम् ।

**ऊर्णविषीष्ट** ( १९२१ )—ऊर्णुधातोराशीर्लिङस्तप्रत्यये 'लिङः सीयुट्' इति सीयुटि उटावितौ 'ऊर्णु सीय् त' इति स्थिते 'लोपो व्योर्वलि' इति यलोपे 'आर्ध-धातुकस्येड्वलादेः' इति इटि 'विभाषोर्णोः' इति इटो ङित्वाऽभावपक्षे गुणे अवादेशे 'सुट्तिथोः' इत्यनेन तस्य सुटि उटि गते षत्वे ष्टुत्वे 'ऊर्णविषीष्ट' इति । इटो ङित्वाद् गुणाऽभावपक्षे उवङि 'ऊर्णुविषीष्ट' इति च सिद्धं भवति ।

**और्णावीत्**—ऊर्णुधातोर्लुङस्तिपि अनुबन्धलोपे 'आडजादीनाम्' इत्याटि 'आटश्च' इति वृद्धौ मध्ये च्लौ च्लेः सिचि इचि गते 'इतश्च' इति तिप इकारलोपे 'आर्धधातुकस्येड्वलादेः' इति सिचः सस्य इटि 'अस्ति सिचोऽपृक्ते' इति अपृक्त-संज्ञकस्य तस्य ईटि अनुबन्धलोपे 'इट ईटि' इति सलोपे 'विभाषोर्णोः' इति इटो ङित्वाद् गुणाऽभावे उवङि अनुबन्धलोपे सवर्णदीर्घे 'और्णुवीत्' इति । ङित्वाऽ-भावपक्षे गुणं बाधित्वा 'ऊर्णोतेर्विभाषा' इति विभाषया वृद्धौ आवादेशे 'और्णावीत्' इति । वृद्ध्यभावपक्षे 'सार्वधातुकार्धधातुकयोः' इति गुणे अवादेशे 'और्णवीत्' इति च सिद्धं भवति ।

**और्णुविष्ट** (१९४४)—ऊर्णुधातोर्लुङि आत्मनेपदे तप्रत्यये आटि 'आटश्च' इति वृद्धौ च्लौ च्लेः सिचि इचि गते 'आर्धधातुकस्येड्वलादेः' इति इटि अनुबन्ध-लोपे 'विभाषोर्णोः' इति इटो ङित्वाद् गुणाऽभावे उवङि अनुबन्धलोपे सिचः सस्य षत्वे ष्टुत्वे 'और्णुविष्ट' इति । ङित्वाऽभावे गुणे अवादेशे 'और्णविष्ट' इति च भवति ।

ऊर्णुनुधातोर्लुङि रूपाणि—

| परस्मैपदे | | | आत्मनेपदे— | | |
|---|---|---|---|---|---|
| और्णुवीत् | और्णुविष्टाम् | और्णुविषुः । | और्णुविष्ट | और्णुविषाताम् | और्णुविषत |
| और्णावीत् | और्णाविष्टाम् | और्णाविषुः । | और्णविष्ट | और्णविषाताम् | और्णविषत |
| और्णवीत् | और्णविष्टाम् | और्णविषुः । | और्णुविष्ठाः | और्णुविषाथाम् | और्णुविढ्वम् / और्णुविध्वम् |
| और्णुवीः | और्णुविष्टम् | और्णुविष्ट । | और्णविष्ठाः | और्णविषाथाम् | और्णविढ्वम् / और्णविध्वम् |
| और्णावीः | और्णाविष्टम् | और्णाविष्ट । | और्णुविषि | और्णुविष्वहि | और्णुविष्महि |
| और्णवीः | और्णविष्टम् | और्णविष्ट । | और्णविषि | और्णविष्वहि | और्णविष्महि |
| और्णुविषम् | और्णुविष्व | और्णुविष्म । | | | |
| और्णाविषम् | और्णाविष्व | और्णाविष्म । | | | |
| और्णविषम् | और्णविष्व | और्णविष्म । | | | |

इति सोत्तरायां प्रश्नावल्यामदादिप्रकरणम् ।

---

# अथ जुहोत्यादिप्रकरणम् ।

जुहोति ( १९३२ )—'हुदानाऽऽदनयोः' इत्यस्माद्धातोर्लटस्तिपि शपि 'जुहोत्यादिभ्यः श्लुः' इति शपः श्लौ 'श्लौ' इति द्वित्वे अभ्यासत्वे 'कुहोश्चुः' इति अभ्यासहकारस्य झत्वे 'अभ्यासे चर्च' इति झस्य जत्वे 'जुहुति' इति भूते 'सार्वधातुकार्धधातुकयोः' इति गुणे जुहोति' इति ।

जुहवाञ्चकार—हुधातोर्लिटि 'भीह्रीभृहुवां श्लुवच्च' इति लिटः पाक्षिके आमि श्लुवद्भावे च विहिते द्वित्वे अभ्यासत्वे चुत्वेन हस्य झत्वे 'अभ्यासे चर्च' इति झस्य जत्वे गुणेऽवादेशे 'आमः' इति लिटो लुकि 'कृञ्चानुप्रयुज्यते लिटि' इति लिटपरककृञोऽनुप्रयोगे 'जुहवाम् कृ लिट्' इति स्थिते लिटस्तिपो णलि द्वित्वे अभ्यासत्वे 'उरत्' इत्यत्वे रपरत्वे 'हलादिः शेषः' इत्यनेन अभ्याससम्बन्धिरेफस्य लोपे 'कुहोश्चुः'

इति अभ्यासककारस्य चुत्वे 'जुहवाम् च कृ अ' इति स्थिते 'अचोञ्णिति' इति वृद्धौ रपरत्वे च विहिते मस्यानुस्वारे परसवर्णे 'जुहवाञ्चकार' इति । आमोऽभावपक्षे लिट-स्तिपि णलि द्वित्वादिकार्ये 'अचोऽञ्णिति' इति वृद्धौ आवादेशे 'जुहाव' इति भवति ।

बिभेति ( १९५१ ) 'ञि भी भये' इत्यस्माद्धातोर्लटि तिपि अनुबन्धलोपे सार्व-धातुकसंज्ञायां शपि 'आदिर्ञिटुडवः' इति 'ञि' इत्यस्येत्संज्ञायां 'तस्य लोपः' इति लोपे 'जुहोत्यादिभ्यः श्लुः' इति शपः श्लौ 'श्लौ' इति द्वित्वे 'पूर्वोऽभ्यासः' इत्य-भ्याससंज्ञायां 'ह्रस्वः' इत्यभ्यासह्रस्वे 'अभ्यासे चर्च' इत्यभ्यासभकारस्य बत्वे 'सार्वधातुकार्धधातुकयोः' इति गुणे 'बिभेति' इति सिद्धम् ।

**बिभितात्** ( १९३३ )—भियो लोटि तिपि अनुबन्धलोपे शपि 'जुहोत्यादिभ्यः श्लुः' इति शपः श्लुत्वे 'श्लौ' इति द्वित्वे अभ्याससंज्ञायां 'ह्रस्वः' इत्यभ्यासस्य ह्रस्वे 'अभ्यासे चर्च' इति अभ्यासभकारस्य बत्वे 'बिभी ति' इति दशायाम् 'एरुः' इति तिप इकारस्य उत्वे 'बिभी तु' इति दशायां 'तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्' इति तातङि अनुबन्धलोपे 'भियोऽन्यतरस्याम्' इत्यनेन ईकारस्य इकारे 'बिभितात्' इति सिद्धम् । 'भियोऽन्यतरस्याम्' इति विकल्पपक्षे बिभीतात्' इति । तातङभावपक्षे 'सार्वधातुकार्धधातुकयोः' इति गुणे 'बिभेतु' इति च रूपं भवति ।

**जिह्रयाञ्चकार** ( १९३४ )—ह्रीधातोर्लिटि 'भीह्रीभृहुवां श्लुवच्च' इत्यामि श्लुवद्भावे च विहिते 'श्लौ' इत्यनेन द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्याससं-ज्ञायां 'ह्रस्वः' इत्यनेन ईकारस्य ह्रस्वे 'हलादिः शेषः' इति अभ्याससम्ब-न्धिरेफस्य लोपे 'कुहोश्चुः' इति अभ्यासहस्य झत्वे 'अभ्यासे चर्च' इति झस्य जत्वे 'जिह्री आम् लिट्' इति स्थिते 'आमः' इति लिटो लुकि 'कृञ्चानुप्रयुज्यते लिटि' इति लिट्परककृञोऽनुप्रयोगे 'जिह्री आम् कृ लिट्' इति भूते 'लिटस्तिपि तिपो णलि अनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इति कृञो द्वित्वे अभ्यासत्वे उरदत्वे 'हलादिः शेषः' इति अभ्यासरेफस्य लोपे 'कुहोश्चु' इति कस्य चत्वे 'जिह्री आम् च कृ अ' इति स्थिते 'सार्वधातुकार्धधातुकयोः' इति गुणे अयादेशे जिह्रयाम् च कृ अ' इति भुते अचोञ्णिति।' इति वृद्धौ रपरत्वे च कृते मस्यानुस्वारे परसवर्णे 'जिह्र-याञ्चकार' इति' आमभावपक्षे लिटस्तिपि तिपो णलि द्वित्वादिकार्ये 'अचोऽञ्णिति' इति वृद्धौ आयादेशे 'जिह्राय' इति भवति ।

**जिह्रीयात्** ( १९३८ )—ह्रीधातोर्विधिलिङि लिङस्तिपि शपि शपः श्लौ

'श्लौ' इति द्वित्वेऽभ्यासत्वे ह्रस्वत्वे 'हलादिः शेषः' इति रलोपे 'कुहोश्चु' इति अभ्यासहस्य झत्वे 'अभ्यासे चर्च' इति झस्य जत्वे यासुटि अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे 'लिङः सलोपोऽनन्त्यस्य' इति सलोपे 'जिह्रीयात् इति सिद्धम् ।

पिपूर्तः ( १९२४ )—पॄधातोर्लटस्तसि सार्वधातुकसंज्ञायां शपि शपः श्लौ 'श्लौ' इति द्वित्वे अभ्याससंज्ञायाम् 'अर्तिपिपर्त्योश्च' इति अभ्यासस्य इकारान्तादेशे रपरत्वे हलादिशेषे 'पि पॄ तस्' इति स्थिते 'उदोष्ठ्यपूर्वस्य' इति उत्वे रपरत्वे 'हलि च' इति धातोरुपधायाः दीर्घे सस्य रुत्वे विसर्गे 'पिपूर्तः' इति सिद्धम् ।

पप्रतुः ( १९४०, ४८ )—पॄधातोर्लिटस्तसि तसोऽतुसि 'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्यासत्वे ह्रस्वे अत्वे रपरत्वे अभ्यासलोपे 'पपॄ अतुस्' इति भूते 'शॄदॄप्रां ह्रस्वो वा' इत्यनेन वैकल्पिके ह्रस्वे 'इको यणचि' इति यणि सस्य रुत्वे विसर्गे 'पप्रतुः' इति । ह्रस्वाऽभावपक्षे 'ऋच्छत्यॄताम्' इति गुणे रपरे च विहिते 'पपरतुः' इति रूपं भवति ।

जहाहि ( १९२१, २७, ३७, ४३ )—'ओहाक् त्यागे' अस्माद्धातोर्लोटः स्थाने मध्यमपुरुषैकवचने सिपि 'सेर्ह्यपिच्च' इति सिपः स्थाने 'हि' इत्यादेशे सार्वधातुकसंज्ञायां शपि शपः श्लौ 'श्लौ' इति द्वित्वे अभ्याससंज्ञायां 'ह्रस्वः' इत्यभ्यासस्याचो ह्रस्वे 'कुहोश्चुः' इति अभ्यासहकारस्य कुत्वेन झत्वे 'अभ्यासे चर्च' इति झस्य जत्वे 'आ च हौ' इति आत्वपक्षे 'जहाहि' इति, इत्वपक्षे 'जहिहि' इति, ईत्वपक्षे तु 'जहीहि' इति रूपत्रयं सिद्धं भवति ।

मिमीते—( १९३९ ) 'माङ् माने शब्दे च' इति धातोर्लटस्ते टेरेत्वे सार्वधातुकसंज्ञायां शपि शपः श्लौ द्वित्वे अभ्यासादिकार्ये 'भृञामित्' इति अभ्यासस्य इत्वे 'ई हल्यघोः' इति धातोराकारस्य ईत्वे 'मिमीते' इति जातम् ।

बिभ्रति ( १९४३ )—भृञ्धातोर्लटः झौ सार्वधातुकसंज्ञायां शपि शपः श्लौ द्वित्वे अभ्यासत्वे 'भृ भृ झि' इति स्थिते 'भृञामित्' इति अभ्यासस्य इत्वे रपरत्वे 'हलादिः शेषः' इति अभ्यासरेफस्य लोपे 'अभ्यासे चर्च' इति अभ्यासभकारस्य बत्वे 'बि भृ झि' इति स्थिते 'उभेऽभ्यस्तम्' इति अभ्यस्तसंज्ञायाम् 'अदभ्यस्तात्' इति झस्य अति 'इको यणचि' इति यणि 'बिभ्रति' इति सिद्धम् ।

अबिभरुः ( १९४५ ) भृधातोर्लङि तत्स्थाने झौ लुङ्लङ्' इत्यटि सार्वधातुकसंज्ञायां शपि शपः श्लौ 'श्लौ' इति द्वित्वे अभ्यासत्वे 'भृञामित्' इति अभ्यासस्य

इत्वे रपरत्वे हलादिशेषे 'अभ्यासे चर्च' इत्यभ्यासभकारस्य बत्वे 'अबि भृ झि' इति जाते जुसि च इति ऋकारस्य गुणे रपरत्वे च विहिते 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुसादेशे सस्य रुत्वे विसर्गे 'अबिभरुः' इति जातम् ।

**भ्रियात्** (१९४४, ४७)—भृधातोराशीर्लिङि तिपि इपाविती यासुटि उटि गते 'स्कोः संयोगाद्योरन्ते च' इति सलोपे 'भृ या त्' इति स्थिते 'रिङ्शयग्लिङ्क्षु' इति ऋकारस्य रिङादेशे अनुबन्धलोपे 'रिङ्' विधानसामर्थ्यात् 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घाऽभावे भ्रियात्' इति सिद्धम् ।

**भृषीष्ट** (१९४३)—'डुभृञ् धारणपोषणयोः' इति धातोरात्मनेपदे आशीर्लिङस्ते 'लिङः सीयुट्' इति सीयुटि उटि गते 'लोपो व्योर्वलि' इति यलोपे 'सुट् तिथोः' इति सुटि उटि गते 'भृ सी स् त' इति स्थिते 'एकाच उपदेशेऽनुदात्तात्' इति इट्निषेधे 'उश्च' इति कित्वाद् गुणाऽभावे सकारस्य षत्वे ष्टुत्वे 'भृषीष्ट' इति सिद्धम् ।

'भृञ् भरणे' इति धातोरप्याशीर्लिङि प्रथमपुरुषैकवचने 'भृषीष्ट' इति रूपं भवति । साधनप्रकारस्त्वित्थमेव ।

**देहि** (१९४७, ५०)—दाधातोर्लोटः स्थाने सिपि तस्य हौ 'दाधाघ्वदाप्' इति घुसंज्ञायां शपः श्लौ द्वित्वे अभ्यासत्वे ह्रस्वत्वे च कृते 'घ्वसोरेद्धावभ्यासलोपश्च' इति एत्वेऽभ्यासलोपे च कृते 'देहि' इति सिद्धम् ।

**दासीष्ट** (१९३६)—दाधातोराशीर्लिङः स्थाने आत्मनेपदे तप्रत्यये 'लिङः सीयुट्' इति सीयुटि उटि गते 'लोपो व्योर्वलि' इति यलोपे 'सुट् तिथोः' इति तस्य सुटि उटि गते 'दा सी स् त' इति स्थिते सुटः सकारस्य 'आदेशप्रत्यययोः' इति षत्वे ष्टुत्वे 'दासीष्ट' इति सिद्धम् ।

**अदात्** (१९३४) दाधातोर्लुङि प्रथमपुरुषैकवचने तिपि अनुबन्धलोपे 'लुङ्लङ्' इति अटि अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे च्लौ च्लेः सिचि इचि गते 'दाधाघ्वदाप्' इति घुसंज्ञायां 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु' इति सिचो लुकि 'अदात्' इति । सिद्धम् ।

**अदित** (१९३४) दाधातोरात्मनेपदे प्रथमपुरुषैकवचने लुङस्तादेशे अडागमे अनुबन्धलोपे च्लौ च्लेः सिचि इचि गते 'दाधाघ्वदाप्' इति घुसंज्ञायां 'स्थाघ्वोरिच्च' इति इदन्तादेशे सिचः कित्वे च कृते कित्वाद्गुणाभावे 'ह्रस्वादङ्गात्' इति सिचः सस्य लोपे 'अदित' इति सिद्धम् ।

डुधाञ् धारणपोषणयोर्लिटि रूपाणि ( १६४४ )—

| परस्मैपदे— | | | | आत्मनेपदे— | | |
|---|---|---|---|---|---|---|
| दधौ | दधतु | दधुः | । | दधे | दधाते | दधिरे |
| दधिथ–दधाथ | दधथुः | दध | । | दधिषे | दधाथे | दधिध्वे |
| दधौ | दधिव | दधिम | । | दधे | दधिवहे | दधिमहे |

**धेहि** ( १९५१ )—धाञ्धातोर्लोटः सिपि 'सेर्ह्यपिच्च' इति सेर्हित्वे सार्वधातुकसंज्ञायां शपि शपः श्लौ 'श्लौ' इति द्वित्वे अभ्याससंज्ञायां 'ह्रस्वः' इत्यभ्यासाकारस्य ह्रस्वे 'दाधाघ्वदाप्' इति घुत्वे 'घ्वसोरेद्धावभ्यासलोपश्च' इति एत्वे अभ्यासलोपे च कृते 'धेहि' इति सिद्धम् ।

**दधाथ** ( १९३५ )—धाधातोर्लिटः सिपि सिपो थलि अनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्यासत्वे 'ह्रस्वः' इति ह्रस्वे 'अभ्यासे चर्च' इति धस्य जश्त्वेन दकारे 'ऋतो भारद्वाजस्य' इति इटि अनुबन्धलोपे 'आतो लोप इटि च' इत्यालोपे 'दधिथ' इति । इडभावपक्षे 'दधाथ' इति सिद्धं भवति ।

**नेनेग्धि** ( १६४१ )—'णिजिर् शौचपोषणयोः' अस्माद्धातोर्लोटि 'इर इत्संज्ञा वाच्या' इति इर इत्संज्ञायां लोपे च विहिते 'णो नः' इति धातोर्णस्य नत्वे 'निज् लोट्' इति स्थिते लोटः स्थाने सिपि सार्वधातुकसंज्ञायां शपि शपः श्लौ द्वित्वे अभ्याससंज्ञायाम् 'शेषे लोपः' इत्यभ्यासजकारस्य लोपे 'सेर्ह्यपिच्च' इति सेर्हित्वे 'निजां त्रयाणां गुणः श्लौ' इति अभ्यासगुणे 'हुझल्भ्यो हेर्धिः' इति हेर्ध्यादेशे 'पुगन्तलघूपधस्य च' इति गुणे 'चोः कुः' इति जस्य गत्वे 'नेनेग्धि' इति जातम् ।

**नेनिजानि** ( १९–४१, ४९ )—'णिजिर् शौचपोषणयोः' इत्यस्माद्धातोर्लोटि 'इर इत्संज्ञा वाच्या' इति वार्तिकेन इर इत्संज्ञायां लोपे च कृते 'णो नः' इति धातोर्णस्य नत्वे 'निज् लोट्' इति स्थिते लोटः स्थाने मिपि 'मेर्निः' इति मेर्न्यादेशे सार्वधातुकसंज्ञायां शपि शपः श्लौ 'श्लौ' इति द्वित्वे अभ्याससंज्ञायां हलादिः शेषः' इति अभ्याससम्बन्धिजकारस्य लोपे 'नि निज् नि' इति स्थिते 'आडुत्तमस्य पिच्च' इत्यादि अनुबन्धलोपे 'निजां त्रयाणां गुणः श्लौ' इत्यभ्यासस्य गुणे 'नेनिज् आनि' इति स्थिते आटः पित्वात् 'पुगन्तलघूपधस्य च' इति गुणे प्राप्ते 'नाभ्यस्तस्याचि पिति सार्वधातुके' इति निषेधे 'नेनिजानि' इति सिद्धम् ।

**अनिजत्, अनैक्षीत्** ( १९४२ )—इरित्संज्ञक 'णिज्' धातोर्लुङि 'णो नः' इति धातोर्णस्य नत्वे लुङः स्थाने तिप्यनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे 'लुङ्लङ्' इत्यटि अनुबन्धलोपे 'च्लि लुङि' इति च्लौ 'इरितो वा' इति विभाषया च्लेरङादेशे अनुबन्धलोपे ङित्वाद् गुणाऽभावे 'अनिजत्' इति। अङभावे च्लेः सिच्यनुबन्धलोपे 'अस्तिसिचोऽपृक्ते' इत्यपृक्तसंज्ञकस्य तिपस्तकारस्य ईटि 'वदव्रजे'ति वृद्धौ जस्य कुत्वे सस्य षत्वे 'अनैक्षीत्' इति सिद्धं भवति।

इति सोत्तरायां प्रश्नावल्यां जुहोत्यादिप्रकरणम्

# अथ दिवादिप्रकरणम्

**नृत्धातोर्लिटि रूपाणि** ( १९४१ )—

| | | |
|---|---|---|
| ननर्त | ननृततुः | ननृतुः |
| ननर्तिथ | ननृतथुः | ननृत |
| ननर्त | ननृतिव | ननृतिम |

**नर्तिष्यति, नर्त्स्यति** ( १९२१, २२ )—नृत्धातोर्लृटस्तिपि अनुबन्धलोपे 'स्यतासी लृलुटोः' इति स्यप्रत्यये तस्यार्धधातुकत्वेन 'सेऽसिचि कृतचृतछृदतृदनृतः' इति इटि अनुबन्धलोपे 'पुगन्तलघूपधस्य च' इति गुणे रपरत्वे सस्य षत्वे 'नर्तिष्यति' इति। इडभावे 'नर्त्स्यति' इति।

**अशात्**—'शो तनूकरणे' अस्माद्धातोर्लुङस्तिपि अनुबन्धलोपे 'लुङ्लङ्' इत्यडागमे 'विभाषाघ्राधेट्शाच्छासः' इति सिचो लुकि 'आदेच उपदेशेऽशिति' इत्यात्वे 'इतश्च' इति तिप इकारलोपे 'अशात्' इति। सिज्लोपाभावपक्षे—आत्वे कृते आदन्तत्वात् 'यमरमनमातां सक् च' इति इटि सकि च विहिते अनुबन्धलोपे 'अस्तिसिचोऽपृक्ते' इति तिपस्तकारस्य ईटि 'इट ईटि' इति सलोपे 'अशासीत्' इति सिद्धं भवति।

**स्यति**—( १९३८ )–'षोऽन्तकर्मणि' अस्माद्धातोर्लटि 'धात्वादेः षः सः' इति धातोरादेः षस्य सत्वे लटः स्थाने तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि प्राप्तं तम्प्रबाध्य 'दिवादिभ्यः श्यन्' इति श्यनि अनुबन्धलोपे 'ओतः श्यनि' इत्योकारस्य लोपे 'स्यति' इति जातम्।

**ससौ** ( १९२८ )—'षोऽन्तकर्मणि' इत्यस्माद्धातोर्लिटि 'धात्वादेः षः सः' इति षस्य सत्वे लिटस्तिपि तिपो णलि 'आदेच उपदेशेऽशिति' इत्यात्वे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्यासत्वे अभ्यासाकारस्य ह्रस्वे 'आत औ णलः' इत्यौत्वे वृद्धौ 'ससौ' इति ।

**ननंष्ठ**—'णश् अदर्शने' इत्यस्माद्धातोर्लिटः सिपि सिपस्थलि अनुबन्धलोपे 'णो नः' इति धातोर्णस्य नत्वे 'लिटि धातो' रिति द्वित्वे अभ्यासत्वे हलादिशेषे 'रधादिभ्यश्च' इति विभाषया इटि अनुबन्धलोपे 'न नश् इ थ' इति जाते 'थलि च सेटि' इति एत्वे अभ्यासलोपे च कृते 'नेशिथ' इति इडभावपक्षे 'न नश् थ' इति स्थिते 'मस्जिनशोर्झलि' इति नुमि उमो लोपे 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः, इति शस्य षत्वे ष्टुत्वे नुमो नस्यानुस्वारे 'ननंष्ठ' इति ।

**दिदीये** ( १९३४ )—'दीङ् क्षये' इत्यस्माद्धातोर्लिटि प्रथमपुरुषैकवचने आत्मनेपदे ते 'लिटि धातोरि'ति द्वित्वे अभ्यासत्वे 'ह्रस्वः' इति ह्रस्वे 'दि दी त' इति स्थिते लिटस्तझयोरेशिरेच्' इति तस्य एशि अनुबन्धलोपे 'दिदीए' इति स्थिते 'दीङो युडचि क्ङिति' इत्यजादेरार्धधातुकस्य युटि तस्यासिद्धत्वात् एरनेकाचः' इति परत्वाद् यणि प्राप्ते 'वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ' इति वार्तिकेनासिद्धत्वाऽभावात् युटि उटि गते 'दिदीये' इति सिद्धम् ।

**अदास्त** ( १९३४,४५ )—'दीङ् क्षये' इत्यस्माद्धातोर्लुङि प्रथमपुरुषैकवचने आत्मनेपदे ते 'लुङ्लुङ्' इत्यडागमे अनुबन्धलोपे च्लौ च्लेः सिचि अनुबन्धलोपे 'मिनातिमिनोतिदीङां ल्यपि च' इत्यनेन आत्वे 'अ दा स् त' इति स्थिते 'दाधाघ्वदाप्' इति घुसंज्ञायां 'स्थाघ्वोरिच्च' इति इत्वे प्राप्ते 'स्थाघ्वोरित्त्वे दीङः प्रतिषेधः' इति तन्निषेधे 'अदास्त' इति सिद्धम् ।

**जायते** ( १९४६ )—'जनी प्रादुर्भावे' अस्माद्धातोर्लटस्तादेशे टेरेत्वे सार्वधातुकसंज्ञायां शपि प्राप्ते तम्प्रबाध्य 'दिवादिभ्यः श्यन्' इति श्यनि अनुबन्धलोपे 'ज्ञाजनोर्जा' इति जादेशे 'जायते' इति सिद्धम् ।

**अजनि**—( १९४१ )—'जनी प्रादुर्भावे' इति धातोर्लुङस्तादेशे 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे च्लौ 'दीपजनबुधपुरितायिप्यायिभ्योऽन्यतरस्याम्' इति विभाषया च्लेश्चिणि अनुबन्धलोपे 'अजन् इ त' इति स्थिते 'अत उपधायाः' इति वृद्धौ प्राप्तायां 'जनिवध्योश्च' इति निषेधे 'चिणो लुक्' इति तल्लोपे 'अजनि' इति चिणोऽभावपक्षे च्लेः सिचि 'आर्धधातुकस्येड्वलादेः' इति इटि षत्वे ष्टुत्वे 'अजनिष्ट' इति भवति ।

**अदीपि** ( १९४९ )—'दीपी दीप्तौ' अस्माद्धातोर्लुङ्स्तादेशे 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे च्लौ 'दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्' इति विभाषयाच्लेश्चिणि अनुबन्धलोपे 'चिणो लुक्' इति चिणः परस्य तशब्दस्य लुकि 'अदीपि' इति। चिणभावपक्षे च्लेः सिचि इटि षत्वे ष्टुत्वे 'अदीपिष्ट' इति च सिद्धं भवति।

**अपादि** ( १९३७,४२,५० )—'पद् गतौ' इति धातोर्लुङ्स्तादेशे अटि अनुबन्धलोपे च्लौ 'चिण् ते पदः' इति च्लेश्चिणि अनुबन्धलोपे 'चिणो लुक्' इति चिणः परस्य तशब्दस्य लुकि 'अत उपधायाः' इति वृद्धौ 'अपादि' इति सिद्धम्।

**बुध-युधधातोर्लिटि थलि** ( १९३१ )—'बुध् अवगमने' 'युध् सम्प्रहारे' इत्यनयोरात्मनेपदित्वाल्लिटि थलि रूपाऽभावो बोध्यः। ( प्रश्नकर्तुरेवात्र भ्रमः )

**अबोधि**—बुध्धातोर्लुङ्स्तादेशे 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे च्लौ 'दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्' इति च्लेश्चिणि 'चिणो लुक्' इति तशब्दस्य लुकि 'पुगन्तलघूपधस्य च' इति गुणे 'अबोधि' इति। चिणभावपक्षे-च्लेः सिचि इचि गते 'झलो झलि' इति सलोपे 'झषस्तथोर्धोऽधः' इति तस्य धत्वे 'झलां जश् झशि' इति धस्य जश्त्वेन दकारे 'अबुद्ध' इति।

**स्रष्टा**—'सृज विसर्गे' इति धातोर्लुटस्तादेशे तासि प्रत्यये तकारस्य डात्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे 'सृजिदृशोर्झल्यमकिति' इत्यमि अनुबन्धलोपे 'स्र अ ज् ता' इति भूते यणि 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' इति षत्वे ष्टुत्वे 'स्रष्टा' इति जातम्।

**असृष्ट**—( १९२७ )—'सृज् विसर्गे' अस्माद्धातोर्लुङ्स्तादेशे 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे च्लौ च्लेः सिचि अनुबन्धलोपे 'लिङ्सिचावात्मनेपदेषु' इति सिचः कित्वाद्गुणाऽभावे 'सृजिदृशोर्झल्यमकिति' इत्यस्याप्यप्राप्ते 'झलो झलि' इति सिचः सस्य लोपे 'व्रश्चभ्रस्जसृजमृज' इति षत्वे ष्टुत्वे 'असृष्ट' इति सिद्धम्।

**ननद्ध**—'णह् बन्धने' अस्माद्धातोर्लिटि 'णो नः' इति धातोर्णस्य नत्वे लिटः सिपि सिपस्थलि अनुबन्धलोपे 'लिटि धातोः' इति द्वित्वे अभ्यासत्वे 'हलादिः शेषः' इत्यभ्याससम्बन्धिहस्य लोपे 'न नह् थ' इति स्थिते 'ऋतो भारद्वाजस्य' इति इटि 'थलि च सेटि' इति एत्वेऽभ्यासलोपे च कृते 'नेहिथ' इति। इडभावपक्षे 'न नह् थ' इति स्थिते 'नहो धः' इति हस्य धत्वे 'झषस्तथोर्धोऽधः' इति थस्य धत्वे 'झलां जश् झशि' इति जश्त्वेन पूर्वधकारस्य दकारे 'ननद्ध' इति सिद्धं भवति।

इति सोत्तरायां प्रश्नावल्यां दिवादिप्रकरणम्।

# अथ स्वादिप्रकरणम् ।

सुनोति ( १९४८ )—'षुञ अभिषवे' इति धातोर्लटि 'धात्वादेः षः सः' इति सत्वे लटस्तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि प्राप्ते तं प्रबाध्य स्वादिभ्यः श्नुः' इति श्नौ अनुबन्धलोपे 'सु नु ति' इति जाते 'सार्वधातुकार्धधातुकयोः' इति गुणे 'सुनोति' इति सिद्धम् ।

असावीत् ( १९४५, ५० )—'षुञ्' धातोर्लुङि प्रथमपुरुषैकवचने लुङस्तिपि अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे 'धात्वादेः ष सः' इति सत्वे 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे च्लौ च्लेः सिचि इचि गते 'अ सु स् त्' इति स्थिते 'स्तुसुधूञ्भ्यः परस्मैपदेषु' इति सिचः सस्य इटि 'अस्तिसिचोऽपृक्ते' इत्यनेन अपृक्तसंज्ञकस्य तिपस्तकारस्य ईटि 'इट ईटि' इति सलोपे 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धौ सवर्णदीर्घे 'असावीत्' इति । आत्मनेपदे 'सार्वधातुकार्धधातुकयोः' इति गुणे षत्वे ष्टुत्वे 'असोष्ट' इति सिद्धं भवति ।

चिकाय ( १९४१ )—'चिञ् चयने' इत्यस्माद्धातोर्लिटि तिपि णलि 'लिटि धातोः—' इति द्वित्वे अभ्यासत्वे 'चि चि अ' इति स्थिते 'विभाषा चेः' इति अभ्यासात्परस्य चकारस्य कुत्वे 'चि कि अ' इति जाते 'अचो ञ्णिति' इति वृद्धौ आयादेशे 'चिकाय' इति । कुत्वाऽभावे 'चिचाय' इत्यपि सिद्धं भवति ।

अचैषीत् ( १९५२ ) चिधातोर्लुङि तिपि अडागमे अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे च्लौ च्लेः सिचि इचि गते सस्य इटि प्राप्ते 'एकाच उपदेशेऽनुदात्तात्' इति निषेधे 'अस्तिसिचोऽपृक्ते' इति तस्य ईटि 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धौ सस्य षत्वे 'अचैषीत्' इति सिद्धम् ।

स्तर्यात् ( १९३८ )—स्तृधातोराशीर्लिङि तिपि अनुबन्धलोपे 'इतश्च' इति इकारलोपे यासुटि उटि गते 'स्तृ यास् त् इति स्थिते 'गुणोर्तिसंयोगाद्योः' इति गुणे रपरत्वे 'स्कोः संयोगाद्योरन्ते च' इति सलोपे 'स्तर्यात्' इति सिद्धम् ।

दुधविथ ( १९३७ )—'धूञ् कम्पने' इति धातोर्लिटः सिपि थलि अनुबन्धलोपे 'लिटि धातोः' इति द्वित्वे अभ्यासत्वे 'ह्रस्वः' इत्यनेन अभ्यासस्य ह्रस्वे 'अभ्यासे चर्च' इति अभ्यासधकारस्य जश्त्वे दकारे 'दु धू थ' इति स्थिते 'स्वरतिसूतिसूयतिधूञूदितो वा' इति वेटि अनुबन्धलोपे 'सार्वधातुकार्धधातुकयोः' इति गुणे अवादेशे 'दुधविथ' इति सिद्धम् । इडभावे गुणे 'दुधोथ' इति च भवति ।

दुधुविव—अकारेत्संज्ञक धूधातोर्लिटः स्थाने वसि वसो 'व' आदेशे धातोर्द्वित्वे अभ्यासत्वे ह्रस्वे 'अभ्यासे चर्च' इति अभ्यासधकारस्य जश्त्वे 'दु धू व' इति जाते 'श्र्युकः किति' इत्यनेन 'पुरस्तादपवादाअनन्तरान् विधीन् बाधन्ते नोत्तरान्' इति न्यायेन 'स्वरतिसूतिसूयतिधूञूदितो वा' इति परत्वात् विभाषया प्राप्तस्येटो निषेधेऽपि क्रादिनियमान्नित्यमिटि अनुबन्धलोपे 'दु धू इ व' इति स्थिते 'अचिश्नु धातुभ्रुवाम्' इति उवङि अनुबन्धलोपे 'दुधुविव' इति जातम् ।

अधावीत् ( १९४६, ४९ )—'धूञ्' धातोर्लुङि प्रथमपुरुषैकवचने लुङ्स्थाने तिपि अनुबन्धलोपे 'लुङ्लङ्' इति अडागमे अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे च्लौ च्लेः सिचि इचि गते 'अ धू स् त्' इति स्थिते 'स्तुसुधूञ्भ्यः परस्मैपदेषु' इति सिचः परत्वान्नित्यमिटि 'अस्तिसिचोऽपृक्ते' इति अपृक्त-संज्ञकस्य तकारस्य ईटि 'इट ईटि' इति सलोपे 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धौ आवादेशे सवर्णदीर्घे 'अधावीत्' इति ।

आत्मनेपदे तु लुङ्स्तादेशे अडागमे च्लौ च्लेः सिचि अनुबन्धलोपे स्वर-त्यादिना विभाषया इटि अनुबन्धलोपे गुणे अवादेशे सिचः सस्य षत्वे ष्टुत्वे च कृते 'अधविष्ट' इति । इडभावे 'अधोष्ट' इति च रूपं सिद्धं भवति ।

इति सोत्तरायां प्रश्नावल्यां स्वादिप्रकरणम् ।

---

# अथ तुदादिप्रकरणम्

**'भ्रस्ज' धातोर्लिटि थलि** ( १६३१ )—भ्रस्जधातोर्लिटि तत्स्थाने सिपि थलि अनुबन्धलोपे 'लिटि धातोः' इति द्वित्वे अभ्यासत्वे 'हलादिः शेषः' इति अभ्याससम्ब-न्धिरेफस्यस्जस्यचलोपे 'अभ्यासे चर्च' इति अभ्यासभकारस्य बकारे 'ब भ्रस्ज् थ' इति स्थिते 'भ्रस्जो रोपधयोरमन्यतरस्याम्' इति रेकस्योपधाभूतस्य सकारस्य च स्थाने रमि प्राप्ते 'मिदचोन्त्यात्परः' इत्यन्त्याचो भकारान्तर्गताऽकारात्परस्यैव रमागमे अमाविती स्थानषष्ठीनिर्देशात् रेफस्योपधाभूतस्य च निवृत्तौ 'आर्धधातु-कस्येड्वलादेः' इतीटि प्राप्ते 'एकाच उपदेशेऽनुदात्तात्' इति निषेधे भारद्वाज नियमात् विकल्पेन इटि अनुबन्धलोपे 'बिभर्जिथ' इति । इडभावे तु द्वित्वादि कार्ये 'बभ्रस्ज्थ' इति स्थिते 'भ्रस्जोरोपधयोः' इति रमि रोपधयोश्च निवृत्तौ 'बभर् ज् थ'

इति स्थिते 'व्रश्चभ्रस्ज' इति जस्य षत्वे ष्टुत्वे 'बभर्ष्ठ' इति। रमभावपक्षे— 'द्वित्वादिकार्ये कृते भारद्वाजनियमात् विकल्पेनेटि अनुबन्धलोपे सस्य श्चुत्वेन शत्वे 'झलां जश् झशि' इति शस्य जत्वे 'बभ्रज्जिथ' इति रमभावे इडभावे च पक्षे पूर्ववद् द्वित्वादिकार्ये 'बभ्रस्ज् थ' इति स्थिते 'स्कोः संयोगाद्योरन्ते च' इति सलोपे 'व्रश्चभ्रस्ज' इति जस्य षत्वे ष्टुत्वे 'बभ्रष्ठ' इति चतुर्थं सिद्धं रूपं भवति ।

**भृज्ज्यात्**( १९ ४४,४५ )—भ्रस्ज्धातोराशीर्लिङि तिपि अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे यासुटि उटि गते 'किदाशिषि' इति यासुटः कित्वात् क्ङिति 'भ्रस्जोरोपधयोः' इति रमागमं बाधित्वा पूर्वविप्रतिषेधेन पूर्वं कित्वात् 'ग्रहिज्या' इति सम्प्रसारणे पूर्वरूपे 'स्कोः संयोगाद्योरन्ते च' इति यासः सकारस्य लोपे 'भृस्ज् या त्' इति स्थिते धातोस्सकारस्य श्चुत्वेन शकारे 'झलांजश् झशि' इति शस्य श्चुत्वेन जत्वे 'भृज्ज्यात्' इति सिद्धम् ।

**भर्क्षीष्ट**—भ्रस्ज्धातोराशीर्लिङि आत्मनेपदे तप्रत्यये 'लिङः सीयुट्' इति सीयुटि अनुबन्धलोपे 'लोपो व्योर्वलि' इति यलोपे 'भ्रस्ज् सी त' इति स्थिते 'सुट् तिथोः' इति तस्य सुटि उटि गते 'भ्रस्जोरोपधयोरमन्यतरस्याम्' इति रेफस्योपधाभूतसकारस्य च स्थाने रमि प्राप्ते 'मिदचोन्त्यात्परः इत्यन्त्याचो भकारान्तर्गताऽकारात्परस्यैव रमागमे अमावितौ स्थानषष्ठीनिर्देशात् रेफस्योपधा-भूतसकारस्य च निवृत्तौ 'व्रश्चभ्रस्ज' इति जस्य षत्वे 'षढो कः सि' इति षस्य कत्वे 'भक्् सी स् त इति दशायाम् 'आदेशप्रत्यययोः' इति सीयुटः सस्य षत्वे पुनः 'आदेशप्रत्यययोः' इति सुटः सस्य षत्वे ष्टुत्वे च कृते 'भर्क्षीष्ट' इति। रमोऽभावपक्षे 'भ्रक्षीष्ट' इति, अत्र 'स्कोः संयोगाद्योरन्ते च' इति संयोगादेः सस्य लोप एव विशेष इत्यवसेयम् ।

**क्रष्टा** ( १९२१, ५० )—कृष्धातोर्लुटि तिपि 'स्यतासी लृलुटोः, इति तासि-प्रत्यये इकारलोपे 'लुटः प्रथमस्य डारौरसः' इति तिपो डादेशे डित्वसामर्थ्या-दभस्यापि टेर्लोपे 'कृष् त् आ' इति स्थिते 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' इति वैकल्पिकेन अमागमे 'कृ अ ष् त् आ' इति स्थिते 'इको यणचि' इति यणि ष्टुत्वे 'क्रष्टा' इति । अमोऽभावे 'पुगन्तलघूपधस्य च' इति गुणे ष्टुत्वे 'कर्ष्टा' इति भवति ।

**अक्राक्षीत्** ( १९२१ )—कृष्धातोर्लुङि प्रथमपुरुषैकवचने परस्मैपदे तिपि

अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे च्लौ 'स्पृशमृशकृशतृपदृपां च्लेः सिज्वा वाच्यः' इति वार्तिकेन च्लेः सिचि इचि गते 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' इति वैकल्पिकेन अमि यणि अनुबन्धलोपे 'अ क ष् स त्' इति स्थिते 'वदव्रजहलन्तस्याचः' इति वृद्धौ 'षढो कः सि' इति धातोः षस्य कत्वे 'आदेशप्रत्यययोः' इति सिचः सस्य षत्वे 'अस्तिसिचोऽपृक्ते' इति अपृक्तसंज्ञकस्य तस्य ईटि अनुबन्धलोपे 'अक्राक्षीत्' इति। अमोऽभावे वृद्धौ रपरत्वे 'अकार्क्षीत्' इति। सिजभावपक्षे 'शल इगुपधादनिटः क्सः' इति च्लेः क्सादेशे अटि षस्य कत्वे षत्वे कित्वाद्गुणाऽभावे 'अकृक्षत्' इति रुपत्रयं सिद्धं भवति। ( आत्मने पदे तु—'अकृष्ट' इति।

'अकृष्ट' इति—कृष्धातोर्लुङि अडागमे लुङस्तादेशे च्लौ 'स्पृशमृशकृष्, इति विभाषया च्लेः सिचि इचि गते 'लिङ्सिचावात्मनेपदेषु' इति कित्वादमगुणयोरभावे 'अकृष् स् त' इति स्थिते 'झलो झलि' इति सलोपे ष्टुत्वे 'अकृष्ट' इति। सिजभावे अटि 'शल इगुपधादनिटः क्सः' इति च्लेः क्सादेशे अनुबन्धलोपे 'अ कृष् स त' इति स्थिते कित्वादमगुणयोरभावे 'षढो कः सि' इति धातोः षकारस्य कत्वे क्ससस्य षत्वे 'अकृक्षत' इति।

कृष्धातोर्लुङि—

**परस्मैपदे—**

| | | |
|---|---|---|
| अक्राक्षीत् / अकार्क्षीत् / अकृक्षत् | अक्राष्टाम् / अकार्ष्टाम् / अकृक्षताम् | अक्राक्षुः / अकार्क्षुः / अकृक्षन्। |
| अक्राक्षीः / अकार्क्षीः / अकृक्षः | अक्राष्टम् / अकार्ष्टम् / अकृक्षतम् | अक्राष्ट / अकार्ष्ट / अकृक्षत। |
| अक्राक्षम् / अकार्क्षम् / अकृक्षम् | अक्राक्ष्व / अकार्क्ष्व / अकृक्षाव | अक्राक्ष्म / अकार्क्ष्म / अकृक्षाम। |

**आत्मनेपदे—**

| | | |
|---|---|---|
| अकृष्ट / अकृक्षत | अकृक्षाताम् / अकृक्षाताम् | अकृक्षत / अकृक्षन्त |
| अकृष्ठाः / अकृक्षथाः | अकृक्षाथाम् / अकृक्षाथाम् | अकृढ्वम् / अकृक्षध्वम् |
| अकृक्षि / अकृक्षि | अकृक्ष्वहि / अकृक्षावहि | अकृक्ष्महि / अकृक्षामहि |

अमुचत् ( १९३१ )—'मुच्लृ मोचने' अस्माद्धातोर्लुङि प्रथमपुरुषैकवचने परस्मैपदे लुङस्तिपि अनुबन्धलोपे 'इतश्च' इति इकारलोपे 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे च्लौ 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' इति च्लेरङि ङित्वाद् गुणाऽभावे 'अमुचत्' इति। आत्मनेपदेतु—'अमुक्त' इति।

'अमुक्त'—मुच्धातोरात्मनेपदे लुङस्तादेशे अटि च्लौ च्लेः सिचि इचि गते 'अमुच् स् त' इति स्थिते 'झलो झलि' इति सलोपे 'चोः कुः' इति कुत्वे 'अमुक्त' इति सिद्धं भवति ।

असिचत् ( १९३१, ४९ )—'षिच् क्षरणे' अस्माद्धातोर्लुङि प्रथमपुरुषैकवचने परस्मैपदे लुङस्तिपि अनुबन्धलोपे 'इतश्च' इति इकारलोपे 'धात्वादेः षः सः' इति षस्य सत्वे 'लुङ् लङ्' इत्यडागमे अनुबन्धलोपे च्लौ 'लिपिसिचिह्वश्च' इति च्लेरङि अनुबन्धलोपे ङित्वात् गुणाऽभावे 'असिचत्' इति । आत्मनेपदे तु—'असिचत' असिक्त इति ।

'असिचत'—सिच् धातोर्लुङस्तादेशे अटि च्लौ 'आत्मनेपदेष्वन्यतरस्याम्' इति च्लेरङि अनुबन्धलोपे ङित्वाद्गुणाऽभावे 'असिचत' इति । अङभावे लुङस्तादेशे अटि च्लौ च्लेः सिचि 'झलो झलि' इति सिचः सस्य लोपे 'चोः कुः' इति कुत्वे 'असिक्त' इति ।

अव्याचीत् ( १९२० )—'व्यच् व्याजीकरणे' अस्माद्धातोर्लुङि तिपि अटि अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे च्लौ च्लेः सिचि इचि गते 'अव्यच् स् त्' इति स्थिते 'आर्धधातुकस्येड्वलादेः' इति सिचः सस्य इटि 'अस्तिसिचोऽपृक्ते' इति अपृक्तसंज्ञकस्य तस्य ईटि 'अतो हलादेर्लघोः' इति वृद्धौ 'इट ईटि' इति सलोपे सवर्णदीर्घे 'अव्याचीत्' इति । वृद्धयभावे 'अव्यचीत्' इति च सिद्धं भवति ।

व्यचेः कुटादित्वमिति—अयम्भावः 'व्यचेः कुटादित्वमनसि' इति व्यच्धातोः कुटादित्वात् 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' इत्यनेन तासादेर्ङिद्वद्भावे तस्मिन् परे व्यचो यकारस्य 'ग्रहिज्ये'त्यनेन सम्प्रसारणे लुटि 'विचिते'त्यादिः कथन्नेति चेन्न, अनसीति पर्युदासेन असुभिन्नाऽसुसदृशस्य कृत्वेनैव तत्र ग्रहणात् । तथाच असुभिन्नकृत्प्रत्यये परे एव तत्प्रवृत्तिरिति भावः ।

आनर्च्छ ( १९४० )—ऋच्छधातोर्लिटस्तिपि णलि अनुबन्धलोपे लिटि धातो'रिति द्वित्वे 'ऋच्छ् ऋच्छ् अ' इति स्थिते अभ्याससंज्ञायाम् 'उरत्' इत्यभ्यास ऋवर्णस्य अत्वे रपरत्वे 'हलादिः शेषः' इत्यभ्यासरेफस्यच्छस्य च लोपे 'अ ऋच्छ अ' इति जाते 'अत आदेः' इत्यभ्यासाऽकारस्य दीर्घे 'आ ऋच्छ् अ' इति स्थिते 'तस्मान्नुड्द्विहलः' इति द्विहल्ग्रहणस्याऽनेकहलुपलक्षणत्वान्नुटि अनुबन्धलोपे 'आ न् ऋच्छ् अ' इति दशायाम् 'ऋच्छत्यृताम्' इति गुणे रपरे 'आनर्च्छ' इति सिद्धम् ।

**लोभिता** ( १६३६ )—लुभ्धातोर्लुटि तिपि तासि तस्याऽर्धधातुकत्वे 'तीषसहलुभरुषरिषः' इति विकल्पेन इटि अनुबन्धलोपे 'पुगन्तलघूपधस्य च' इति गुणे तिपो डादेशे डित्वसामर्थ्यादभस्यापि टेर्लोपे लोभिता' इति। इडभावे 'झषस्तथोर्धोधः' इति तस्य धत्वे 'झलां जश् झशि' इति भस्य बत्वे गुणे 'लोब्धा' इति सिद्धम्।

**तृम्फति**—'तृम्फ' धातुरुपदेशे 'तृन्फ्' इति। तस्माल्लटितिपि 'तुदादिभ्यः शः' इति शपं प्रबाध्य शप्रत्यये शस्याऽपित्वेन 'सार्वधातुकमपित्' इति ङित्वे 'अनिदिताम्' इति नलोपे 'शे तृम्फादीनां नुम्वाच्यः' इति वार्तिकेन नुमि अनुबन्धलोपे अनुस्वारे परसवर्णे 'तृम्फति' इति।

**ममङ्क्थ** ( १९३१, ४६ )—मस्ज्धातोर्लिटि सिपि थलि अनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्यासत्वे 'हलादिः शेषः' इत्यभ्यासस्यान्त्यहलो लोपे 'म मस्ज् थ' इति भूते 'स्तोः श्चुना श्चुः' इति सस्य श्चुत्वेन शत्वे 'झलां जश् झशि' इति शस्य जस्त्वेन जत्वे 'ऋतो भारद्वाजस्य' इति विभाषया इटि झलादित्वाऽभावान्नुमोऽभावे 'ममज्जिथ' इति। इडभावे तु 'मस्जिनशोर्झलि' इति सूत्रेण 'मस्जेरन्त्यात्पूर्वो नुम्वाच्यः' इति वार्तिकबलात् सकारात् परे नुमि अनुबन्धलोपे 'म मस् न् ज् थ' इति दशायां 'स्कोः संयोगाद्योरन्ते च' इति सलोपे 'म मन् ज् थ' इति भूते 'चोः कु' इति जस्य कुत्वेन गत्वे 'खरि च' इति गस्य कत्वे नस्यानुस्वारे परसवर्णे 'ममङ्क्थ' इति च सिद्धं भवति।

**अम्राक्षीत्** ( १९२०, ३१ )—'मृश आमर्षने' अस्माद्धातोर्लुङि प्रथमपुरुषैकवचने लुङस्तिपि अटि अनुबन्धलोपे च्लौ 'स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः' इति वार्तिकेन विकल्पेन च्लेः सिचि इचि गते 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' इति विभाषया अमि मलोपे 'अम्र् अ श् स् ति' इति स्थिते ऋकारस्य यणि 'इतश्च' इति तिप इकारलोपे व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' इति शस्य षत्वे 'वदव्रजहलन्तस्याचः' इति वृद्धौ 'षढोः कः सि' इति षस्य कत्वे 'आदेशप्रत्यययोः' इति सिचः सस्य षत्वे 'अस्तिसिचोऽपृक्ते' इति अपृक्तसंज्ञकस्य तस्य ईटि अनुबन्धलोपे 'अम्राक्षीत्' इति। अमोऽभावे उक्तसूत्रेण विभाषया च्लेः सिचि कृते 'अमृश् स त' इति स्थिते ईटि 'वदव्रजे'ति वृद्धौ रपरत्वे 'व्रश्च'ति षत्वे कत्वे सिचः सस्य च षत्वे 'अमार्क्षीत्' इति। सिजभावे तु 'शल इगुपधादनिटः क्स' इति च्लेः क्सादेशे धातोः शस्य 'व्रश्चे'ति षत्वे कत्वे सिचः सस्य च षत्वे कित्वाद्वृद्ध्यभावे 'अमृक्षत्'। इति च सिद्धं भवति।

किरति ( १९४२ )—'कॄ विक्षेपे' अस्माद्धातोर्लटस्तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि प्राप्ते तं प्रबाध्य 'तुदादिभ्यः शः' इति शप्रत्यये अनुबन्धलोपे 'ॠत इद्धातोः' इति ॠकारस्य इत्वे रपरत्वे 'किरति' इति सिद्धम् ।

चकरतुः ( १९२९ )—कॄधातोर्लिटस्तसि तसोऽतुसि धातोर्द्वित्वे अभ्यासत्वे ह्रस्वे 'उरत्' इत्यत्वे रपरत्वे हलादिशेषे 'कुहोश्चु' इति चुत्वे 'च कॄ अतुस्' इति स्थिते 'ऋच्छत्यॄताम्' इति गुणे रपरे सकारस्य रुत्वे विसर्गे 'चकरतुः' इति सिद्धम् ।

उपस्किरति ( १९२०, २१, ४८ ) उपोपसर्गात् 'कॄ' धातोर्लटि तिपि शे अनुबन्धलोपे 'ॠत इद्धातोः' इति इत्वे रपरत्वे च कृते 'उप किरति' इति स्थिते 'किरतौ लवने' इति सुटि उटावितौ टित्वादाद्यावयवे 'उपस्किरति' इति ।

उपास्किरत् ( १९२७ )—उपोपसर्गात् कॄधातोर्लङस्तिपि शे 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे तिप इकारलोपे 'ॠत इद्धातोः' इति इत्वे रपरत्वे 'उप अ किरत्' इति दशायां 'सुट् कात्पूर्वः इति वक्तव्यम्' इति वार्तिकबलात् 'अडभ्यासव्यवायेऽपि' इति सूत्रेण अडव्यवधाने सत्यपि ककारात्पूर्वं सुटि अनुबन्धलोपे सवर्णदीर्घे 'उपास्किरत्' इति सिद्धम् ।

गिलति ( १९४७ )—'गॄ निगरणे' इति धातोर्लटस्तिपि शप्रत्यये अनुबन्धलोपे 'ॠत इद्धातोः' इति इत्वे रपरत्वे 'अचि विभाषा' इति वैकल्पिके लत्वे 'गिलति' इति । लत्वाऽभावे 'गिरति' इति च सिद्धं भवति ।

अप्राक्षीत् ( १९४५, ५१ )—प्रच्छधातोर्लुङि प्रथमपुरुषैकवचने लुङस्तिपि 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे च्लौ च्लेः सिचि इचि गते 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' इति छस्य षत्वे 'षढोः कः सि' इति षस्य कत्वे 'अस्तिसिचोऽपृक्ते' इति अपृक्तसंज्ञकस्य तस्य ईटि 'वदव्रजे'ति वृद्धौ 'अप्राक्षीत्' इति सिद्धं भवति ।

उद्विजिता ( १९२५, ३०, ४१ )—उत्पूर्वात् 'ओविजी भयचलनयोः' इत्यस्माद्धातोर्लुटि लुटस्तादेशे तासिप्रत्यये इडागमे अनुबन्धलोपे 'लुटः प्रथमस्य डारौरसः' इति आदेशे डित्वसामर्थ्यादभस्यापि टेर्लोपे 'विज इट्' इति ङित्वाद् गुणाऽभावे 'उद्विजिता' इति सिद्धम् ।

इति सोत्तरायां प्रश्नावल्यां तुदादिप्रकरणम् ।

# अथ रुधादिप्रकरणम्

रुणद्धि ( १९३२ ) 'रुधिर् आवरणे' इतिधातोर्लटस्तिपि सार्वधातुकसंज्ञायां शपि प्राप्ते तं प्रबाध्य 'रुधादिभ्यः श्नम्' इति श्नमि अनुबन्धलोपे 'रु न ध् ति' इति जाते 'अट्कुप्वाङ्' इति नस्य णत्वे 'झषस्तथोर्धोऽधः' इति तस्य धत्वे 'झलां जश् झशि' इति धस्य दत्वे 'रुणद्धि' इति सिद्धम् ।

रुन्धः ( १९४६ )—रुध्धातोर्लटस्तसि शपमपवाद्य श्नमि अनुबन्धलोपे 'रु न ध् तस्' इति स्थिते 'श्नसोरल्लोपः' इति श्नमो नकारान्तर्गताकारस्य लोपे 'झषस्तथोर्धोऽध' इति तसस्तकारस्य धत्वे 'झरो झरि सवर्णे' इति धातोर्धस्य लोपे सस्य रुत्वे विसर्गे 'रुन्धः' इति सिद्धम् ।

तृणेढि ( १९३७, ४१, ४७ )—'तृह् हिंसायाम्' इत्यस्माद्धातोर्लटस्तिपि शपमपवाद्य श्नमि अनुबन्धलोपे 'ऋवर्णान्नस्य णत्वं वाच्यम्' इति श्नमो नस्य णत्वे 'तृणह् ति' इति स्थिते 'तृणह इम्' इति इमि अनुबन्धलोपे 'तृण इ ह् ति' इति दशायाम् 'आद्गुणः' इति गुणे 'हो ढः' इति हस्य ढत्वे 'झषस्तथोर्धोऽधः' इति तिपस्तकारस्य धकारे धस्य ष्टुत्वेन ढकारे 'ढो ढे लोपः' इति पूर्वढकारस्य लोपे 'तृणेढि' इति जातम् ।

अतृणेट् ( १९४३, ४४ )—तृहधातोर्लङि लङस्तिपि 'लुङ्लङ्' इत्यटि अनुबन्धलोपे तिप इकारलोपे 'अ तृह् त्' इति दशायां शपमपवाद्य श्नमि 'तृणह इम्' इति इमागमे अनुबन्धलोपे 'ऋवर्णान्नस्य णत्वं वाच्यम्' इति नस्य णत्वे 'आद्गुणः' इति गुणे 'अतृणेह्त्' इति जाते 'हो ढः' इति हस्य ढत्वे हल्ङ्याादिना तलोपे 'झलां जशोऽन्ते' इति ढस्य डत्वे 'वाऽवसाने' इति डस्य चर्त्वे 'अतृणेट्' इति ।

हिनस्ति ( १९४९ )—'हिसि हिंसायाम्' इति धातोर्लटस्तिपि 'इदितो नुम्धातोः' इति धातोरिदित्वान्नुमि श्नमि अनुबन्धलोपे 'हि न न् स् ति' इति भूते 'श्नान्नलोपः' इति श्नमः परस्य नस्य लोपे 'हिनस्ति' इति जातम् ।

अहिनः ( १९३९ ) इदित्संज्ञक 'हिस्' धातोर्लङ्सिपि 'इदितो नुम्धातोः' इति नुमि 'लुङ्लङ्' इत्यडागमे शपमपवाद्य श्नमि अनुबन्धलोपे 'श्नान्नलोपः' इति श्नमः परस्य नस्य लोपे 'इतश्च' इति सिप इकारलोपे 'हल्ङ्याब्भ्यः' इति सलोपे 'सिपि धातो रुर्वा' इति पाक्षिके रुत्वे रेफस्य विसर्गे 'अहिनः' इति । रुत्वाऽभावे 'झलां जशोऽन्ते' इति सस्य दत्वे 'वाऽवसाने' इति दस्य चर्त्वे 'अहिनत्' इति । चर्त्वाऽभावे 'अहिनद्' इति तृतीयं रूपं भवति ।

**औनत्** ( १९३८ )—'उन्दी क्लेदने' अस्माद्धातोर्लङि तिपि शपमपवाद्य श्नमि अनुबन्धलोपे 'उनन् द् ति' इति जाते 'आडजादीनाम्' इत्यादि अनुबन्धलोपे 'आटश्च' इति वृद्धौ 'श्नान्नलोपः' इति धातोर्नस्य लोपे 'औनद् ति' इति स्थिते 'इतश्च' इति इकारलोपे 'हल्ङ्याब्भ्यः' इति तलोपे 'वाऽवसाने' इति दस्य चर्त्वे 'औनत्' इति । चर्त्वाऽभावे 'औनद्' इति भवति ।

**अनजानि** ( १६३५, ४० )—अञ्जधातोर्लोटस्थाने मिपि श्नमि अनुबन्धलोपे 'श्नान्नलोपः' इति धातोरुपदेशनकारस्य लोपे 'मेर्निः' इति मेर्न्यादेशे 'आडुत्तमस्य पिच्च' इत्यादि अनुबन्धलोपे 'अनजानि' इति सिद्धम् ।

**आनक्** ( १९३० )—अञ्ज्धातोर्लङस्तिपि श्नमि अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे 'श्नान्नलोपः' इति नलोपे 'आडजादीनाम्' इत्यादि 'आटश्च' इति वृद्धौ 'हलङ्याब्भ्यः' इति तलोपे 'चोः कुः' इति जस्य कुत्वेन गकारे 'वाऽवसाने' इति चर्त्वे 'आनक्' इति । चर्त्वाभावे 'आनग्' इति च भवति ।

**आञ्जीत्** ( १९२१,२६ )—अञ्ज्धातोर्लुङस्तिपि अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे 'आडजादीनाम्' इत्यादि वृद्धौ च्लौ च्लेः सिचि इचि गते 'अञ्जेः सिचि' इति सिचो नित्यमिटि 'अस्तिसिचोऽपृक्ते' इति तस्य ईटि 'इट ईटि' इति सलोपे 'सवर्णदीर्घे' 'आञ्जीत्' इति सिद्धम् ।

**शिण्ड्ढि** ( १६४५,४६ )—लृकारेत्संज्ञक शिष् धातोर्लोटः सिपि शपमपवाद्य श्नमि अनुबन्धलोपे 'सेर्ह्यपिच्च' इति सेर्ह्यादेशे 'शिनष् हि' इति जाते 'हुझल्भ्यो हेर्धिः' इति हेर्धित्वे 'श्नसोरल्लोपः' इत्यलोपे शिन्ष् धि' इति दशायां 'झलां जश् झशि' इति षस्य जश्त्वेन डकारे 'ष्टुना ष्टुः' इति धस्य ढत्वे 'शिन्ड् ढि' इति स्थिते 'झरो झरि सवर्णे' इति लोपे नस्यानुस्वारे परसवर्णे च कृते 'शिण्ढि' इति । डलोपाभावे तु 'शिण्ड्ढ' इति बोध्यम् ।

**भुजोनवने** (१९५०) 'भुजः, अनवने' इति पदच्छेदः । अवनं = रक्षणं, तद्भिन्ने अर्थे भुज्धातोरात्मनेपदं स्यादित्यर्थः । तेन भोजनेऽर्थे भुज्धातोरात्मनेपदे सति 'ओदनं भुङ्क्ते' इति भवति । रक्षणे तु 'महीं भुनक्ति ( रक्षति )' इति परस्मैपदं भवति ।

इति सोत्तरायां प्रश्नावल्यां रुधादिप्रकरणम् ।

# अथ तनादिप्रकरणम्

**अतानीत्** ( १९४६ )—'तनु विस्तारे' अस्माद्धातोर्लुङि प्रथमैकवचने लुङस्तिपि 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे 'इतश्चे'ति तिप इकारलोपे च्लौ च्लेः सिचि इचि गते 'आर्धधातुकस्येड्वलादेः' इति सस्य इटि 'अस्तिसिचोऽपृक्ते' इति तस्य च ईटि 'इट ईटि' इति सलोपे सवर्णदीर्घे 'अतो हलादेर्लघोः' इति विकल्पेन वृद्धौ 'अतानीत्' इति। वृद्ध्यभावे 'अतनीत्' इति। आत्मनेपदे तु—लुङःस्थाने तादेशे अडागमे अनुबन्धलोपे च्लौ च्लेः सिचि 'तनादिभ्यस्तथासोः' इति विभाषया सिचो लुकि 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' इत्यनुनासिकनकारस्य लोपे 'अतत' इति। सिज्लोपाभावे सिचः सकारस्य इटि षत्वे 'अतनिष्ट' इति च रूपं भवति।

**असात** (१९२२)—उकारेत्संज्ञक 'षणु दाने' इत्यस्माद्धातोर्लुङि 'धात्वादेः षः सः' इति सत्वे 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति परिभाषया षस्य सत्वे सति णत्वस्यापि निवृत्तौ 'सन लुङ्' इति जाते आत्मनेपदे लुङस्तादेशे अटि अनुबन्धलोपे च्लौ च्लेः सिचि 'तनादिभ्यस्तथासोः' इति विभाषया सिचो लोपे 'अ सन् त' इति जाते 'जनसनखनां सञ्झलोः' इत्यनेन 'अलोन्त्यस्ये'ति सहकारेण नस्यात्वे सवर्णदीर्घे 'असात' इति जातम्।

**अक्षत** ( १९३५ )—उकारेत्संज्ञक 'क्षणु' धातोर्लुङस्तादेशे अडागमे अनुबन्धलोपे च्लौ च्लेः सिचि 'तनादिभ्यस्तथासोः' इति पाक्षिके सिचो लोपे 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' इत्यनुनासिकस्य णस्य लोपे 'अक्षत' इति। लुगभावपक्षे सिचः सस्य इटि षत्वे ष्टुत्वे 'अक्षणिष्ट' इति भवति।

**कुरुतः** ( १९३२ )—'डु कृञ् करणे' धातोर्लटस्तसि सार्वधातुकसंज्ञायां शपि प्राप्ते तम्प्रबाध्य 'तनादिकृञ्भ्य उः' इत्युप्रत्यये 'सार्वधातुकार्धधातुकयोः' इति गुणे रपरत्वे 'करु तस्' इति जाते 'अत उत्सार्वधातुके' इति कृञोऽकारस्य उत्वे सस्य रुत्वे विसर्गे 'कुरुतः' इति।

**कुर्वन्ति**( १९ ३८,४५,४८,५२ )—'डु कृञ् करणे' इत्यस्माद्धातोर्लटि तत्स्थाने झौ झस्य अन्तादेशे शपं प्रबाध्य 'तनादिकृञ्भ्यः उः' इत्युप्रत्यये 'कृ उ अन्ति' इति जाते 'सार्वधातुकार्धधातुकयोः' इति गुणे रपरत्वे 'क रु अन्ति' इति भूते 'अत उत्सार्वधातुके' इति कृञोऽकारस्य उत्वे 'इको यणचि' इत्युप्रत्ययसम्बन्धिनो-

कारस्य यणि 'हलि च' इति रेफान्तस्योपधायाः दीर्घत्वे प्राप्ते 'न भकुर्छुराम्' इति निषेधे 'कुर्वन्ति' इति जातम् ।

**चक्रतुः** ( १९२९ )—'डु कृञ् करणे' इत्यस्माद्धातोर्लिटि तत्स्थाने अतुसि धातोर्द्वित्वे अभ्यासत्वे उरदत्वे रपरत्वे च कृते 'हलादिः शेषः' इत्यभ्याससम्बन्धि-रेफस्य लोपे 'कुहोश्चुः' इति चुत्वे यणि सस्य रुत्वे विसर्गे 'चक्रतुः' इति सिद्धम् ।

**कुर्यात्** ( १६५० )—कृधातोर्विधिलिङि लिङो लस्थाने तिपि अनुबन्धलोपे तिप इकारलोपे च कृते सार्वधातुकसंज्ञायां शपि प्राप्ते तम्प्रबाध्य 'तनादिकृञ्भ्य उः' इत्युप्रत्यये तस्यार्धधातुकत्वात्तस्मिन् परे कृञो ऋकारस्य गुणे रपरत्वे 'क र् उ त्' इति स्थिते 'अत उत्सार्वधातुके' इति ककारघटकाऽकारस्य उत्वे यासुटि उटि गते 'लिङः सलोपोऽनन्त्यस्य' इति सलोपे 'कु र् उ यात्' इति जाते 'ये च' इत्यनेन उकारस्य लोपे 'कुर्यात्' इति सिद्धम् ।

**कुर्वीत** ( १९३६ )—कृञ्धातोर्विधिलिङि लिङः स्थाने आत्मनेपदे तादेशे शपं प्रबाध्य 'तनादिकृञ्भ्य उः' इत्युप्रत्यये गुणे रपरत्वे 'करु त' इति स्थिते 'अत उत्सार्वधातुके' इति ककाराऽकारस्य उत्वे 'लिङः सीयुट्' इति सीयुटि उटि गते 'लोपो व्योर्वलि' इति यलोपे 'कुरु सी त' इति जाते 'लिङः सलोपोऽनन्त्यस्य' इति सलोपे यणि 'कुर्वीत' इति सिद्धम् ।

**क्रियात्** ( १९४२—कृधातोराशीर्लिङि तिपि अनुबन्धलोपे 'इतश्चे'ति तिप इकारलोपे यासुटि उटि गते 'स्कोः संयोगाद्योरन्ते च' इति सलोपे 'रिङ्शयग्लिङ्क्षु' इति ऋतो रिङादेशे 'क्रियात्' इति जातम् ।

**अकार्षीत्** ( १९५१ )—कृधातोर्लुङस्तिपि 'लुङ्लङ्' इत्यडागमे अनुबन्ध-लोपे 'इतश्च' इति तिप इकारलोपे च्लौ च्लेः सिचि इचि गते सस्यार्धधातुकत्वादिटि प्राप्ते 'एकाच उपदेशेऽनुदात्तात्' इति निषेधे 'अस्तिसिचोऽपृक्ते' इति तस्य ईटि 'अकृ स् ईत्' इति स्थिते 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धौ 'आदेशप्रत्यययोः' इति षत्वे 'अकार्षीत्' इति निष्पन्नम् ।

**कृञ्धातोर्लुङि रूपाणि** ( १९४४, ४७ )—

| परस्मैपदे | | | आत्मनेपदे— | | |
|---|---|---|---|---|---|
| अकार्षीत् | अकार्ष्टाम् | अकार्षुः | अकृत | अकृषाताम् | अकृषत |
| अकार्षीः | अकार्ष्टम् | अकार्ष्ट | अकृथाः | अकृषाथाम् | अकृढ्वम् |
| अकार्षम् | अकार्ष्व | अकार्ष्म | अकृषि | अकृष्वहि | अकृष्महि |

**उपस्कुरुते**—( १९३७ )—उपपूर्वकात् कृधातोरात्मनेपदे लटि तत्स्थाने तप्रत्यये एत्वे शपं प्रबाध्य 'तनादिकृञ्भ्यः उः' इति उप्रत्यये 'अत उत्सार्वधातुके' इति कृञो ऋकारस्य उत्वे 'उप कुरुते' इति स्थिते 'उपात्प्रतियत्नवाक्याध्याहारेषु' इति चकारानुगृहीतभूषणेऽर्थे सुटि उटि गते 'उपस्कुरुते' इति । 'अलङ्करोती'त्यर्थः ।

**उपस्कृतं ब्रुते** ( १९२१ ) अत्र 'उपात्प्रतियत्ने'ति सूत्रेण वाक्याध्याहारार्थे सुट् । वाक्याध्याहारेण ब्रुते इत्यर्थः । '**एधोदकस्योपस्कुरुते**' इत्यत्र तु प्रतियत्नेऽर्थे सुड् भवति । प्रतियत्नः = उपधानमिति मूले स्पष्टम् ।

इति सोत्तरायां प्रश्नावल्यां तनादिप्रकरणम् ।

---

# अथ क्र्यादिप्रकरणम्

**डुक्रीञ् द्रव्यविनिमये धातोर्लिटि रूपाणि ( १९४८ )**—

| परस्मैपदे— | | | आत्मनेपदे— | | |
|---|---|---|---|---|---|
| चिक्राय | चिक्रियतुः | चिक्रियुः | चिक्रिये | चिक्रियाते | चिक्रियिरे |
| चिक्रयिथ, चिक्रेथ | चिक्रियथुः | चिक्रिय | चिक्रियिषे | चिक्रियाथे | चिक्रयिध्वे, चिक्रयिढ्वे |
| चिक्राय, चिक्रय | चिक्रियिव | चिक्रियम | चिक्रिये | चिक्रियिवहे | चिक्रियिमहे |

**प्रमीणीते** ( १९३७ )—प्रोपसर्गात् 'मीञ् हिंसायाम्' इति धातोर्लटि तत्स्थाने आत्मनेपदे तप्रत्यये टेरेत्वे शपं प्रबाध्य 'क्र्यादिभ्यः श्ना' इति श्नाप्रत्यये अनुबन्धलोपे 'हिनुमीना' इत्यनेन णत्वे 'ई हल्यघोः' इति ईत्वे 'प्रमीणीते' इति जातम् ।

**मीञ्धातोर्लुङि रूपाणि ( १९३८ )**

| परस्मैपदे— | | | आत्मनेपदे— | | |
|---|---|---|---|---|---|
| अमासीत् | अमासिष्टाम् | अमासिषुः | अमास्त | अमासाताम् | अमासत |
| अमासीः | अमासिष्टम् | अमासिष्ट | अमास्थाः | अमासाथाम् | अमाध्वम् |
| अमासिषम् | अमासिष्व | अमासिष्म | अमासि | अमास्वहि | अमास्महि |

**स्तभान** ( १९२९,३०,३५,५१ )—उकारेत्संज्ञक-रोधनार्थक-'स्तम्भ' धातुः सौत्रः । तस्माल्लोटि तत्स्थाने सिपि सिपः सार्वधातुकत्वात् शपि प्राप्ते तमपवाद्य "स्तम्भुस्तुम्भु—'इत्यादिसूत्रेण चकारात् श्नाप्रत्यये अनुबन्धलोपे सेर्ह्यादेशे 'स्तम्भ

ना हि' इति स्थिते 'हलः श्नः शानज्झौ' इति नाशब्दस्य शानआदेशे अनुबन्धलोपे शित्वात्सार्वधातुकत्वेन 'सार्वधातुकमपित्' इति ङित्वे सति 'अनिदिताम्—' इति धातोर्नस्य लोपे 'अतो हेः' इति हेर्लुकि 'स्तभान' इति जातम् ।

**व्यष्टभत** ( १९२३,४९ )—विपूर्वकात् 'स्तन्भ' धातोर्लुङि तिपि अडागमे अनुबन्धलोपे तिप इकारलोपे च्लौ च्लेः सिचि प्राप्ते तम्प्रबाध्य 'जृस्तन्भुम्रुचु—' इत्यादिना अङि अनुबन्धलोपे 'वि अ स्तन्भ् अ त्' इति जाते यणि 'अनिदिताम्–' इति नलोपे 'स्तन्भेः' इति सस्य षत्वे ष्टुत्वे 'व्यष्टभत्' इति । अङोऽभावे च्लेः सिचि इचि गते 'वि अस्तन्भ् स् त्' इति स्थिते यणि सस्य इटि 'अस्तिसिचोऽपृक्ते' इति तस्य च ईटि अनुबन्धलोपे 'इट ईटि' इति सलोपे सवर्णदीर्घे 'स्तन्भेः' इति सस्य षत्वे ष्टुत्वे नस्यानुस्वारे परसवर्णे 'व्यष्टम्भीत्' इति च भवति । मूले तु अङभावे 'अस्तम्भीत्' इत्युक्तम् । अत्र 'स्तन्भेः' इति षत्वन्तु न उपसर्गादिणः परस्यैव स्तन्भेः सस्य षः स्यादित्यर्थात् ।

**प्वादयः** ( १९२५ )—'पूञ्–लूञ्–स्तॄञ्–कॄञ्–वॄञ्–धूञ्–शॄ–पॄ–वॄ–भॄ–मॄ–दॄ–जॄ–झॄ–धॄ–नॄ–कॄ–ऋॄ–गॄ–ज्या–री–ली–व्ली–प्ली' इत्येते प्वादिसंज्ञकाः धातवः ।

**स्तरिषीष्ट**–स्तॄधातोराशीर्लिङि लिङः स्थाने आत्मनेपदे तप्रत्यये 'लिङः सीयुट्' इति सीयुटि उटावितौ 'लोपो व्योर्वलि' इति यलोपे 'स्तॄ सी त' इति स्थिते 'सुट् तिथोः' इति सुटि उटि गते 'लिङ्सिचावात्मनेपदेषु' इति विभाषया इटि अनुबन्धलोपे 'सार्वधातुकार्धधातुकयोः' इति गुणे रपरत्वे 'स्तरि सी स् त' इति जाते 'वॄतो वा' इति इटो दीर्घे प्राप्ते 'न लिङि' इति निषेधे उभयोः सकारयोः षत्वे ष्टुत्वे 'स्तरिषीष्ट' इति जातम् । इडभावे तु 'उश्च' इति कित्वाद् गुणाभावे 'ॠत इद्धातोः' इति इत्वे रपरत्वे 'हलि च' इदि दीर्घे 'स्तीर्षीष्ट' इति । अन्यत्कार्यं तु पूर्ववदेव बोध्यम् ।

**ग्रहीता** ( १९४२, ५० )—ग्रह्धातोर्लुटि तिपि तासिप्रत्यये तिपो डादेशे अनुबन्धलोपे डित्वसामर्थ्यादभस्यापि टेर्लोपे 'आर्धधातुकस्येड्वलादेः' इति इटि अनुबन्धलोपे 'ग्रहोऽलिटि' इति इटो दीर्घे 'ग्रहीता' इति ।

**गृहाण** ( १९२३, ३५, ३६, ४१, ५२ )—ग्रह्धातोर्लोटि मध्यमपुरुषैकवचने सिपि अनुबन्धलोपे 'सेर्ह्यपिच्च' इति सेर्ह्यादेशे शपमपवाद्य 'क्र्यादिभ्यः श्ना' इति श्नाप्रत्यये अनुबन्धलोपे शित्वात्सार्वधातुकत्वे 'सार्वधातुकमपित्' इति ङित्वे 'ग्रहिज्ये'ति सम्प्रसारणे पूर्वरूपे 'हलः श्नः शानज्झौ' इति श्नः शानजादेशे शस्येत्संज्ञायां लोपे च विहिते नस्य णत्वे 'अतो हेः' इति हेर्लुकि 'गृहाण' इति जातम् ।

**अग्रहीत्** ( १९४४ )—ग्रह्धातोर्लुङि तिपि अडागमे अनुबन्धलोपे तिप इकारलोपे च्लौ च्लेः सिचि इचि गते 'अग्रह् स् त्' इति स्थिते 'आर्धधातुकस्य-वलादेः' इति सस्य इटि 'अस्तिसिचोऽपृक्ते' इति तस्य च ईटि 'इट ईटि' इति सलोपे सिज्लोपस्य सिद्धत्वात् सवर्णदीर्घे 'वदव्रजे'ति प्राप्तदीर्घस्य 'नेटि' इत्यनेन, 'अतो हलादेर्लघोः' इति प्राप्तवृद्धस्य 'ह्म्यन्ते'त्यनेन निषेधे 'अग्रहीत्' इति जातम् ।

**अशान** ( १९२९ )—'अश् भोजने' इत्यस्माद्धातोर्लोटः स्थाने सिपि सेर्ह्या-देशे शपमपवाद्य 'क्र्यादिभ्यः श्ना' इति श्नाप्रत्यये 'हलः श्नः शानज्झौ' इति श्नः शानजादेशे अनुबन्धलोपे 'अश् आन हि' इति दशायाम् 'अतो हेः' इति हेर्लुकि 'अशान' इति सिद्धम् ।

**मुषाण** ( १९४७ )—मुष्धातोर्लोटः स्थाने सिपि सेर्ह्यादेशे शपमपवाद्य 'क्र्यादिभ्यः श्ना' इति श्नाप्रत्यये 'हलः श्नः शानज्झौ' इति श्नः शानजादेशे अनुबन्धलोपे 'मुष् आन हि' इति स्थिते 'अतो हेः' इति हेर्लुकि 'रषाभ्याम्' इति णत्वे 'मुषाण' इति जातम् ।

इति सोत्तरायां प्रश्नावल्यां क्र्यादिप्रकरणम् ।

---

# अथ चुरादिप्रकरणम्

**अचूचुरत्, अचूचुरत** ( १९२८, ३०, ३७ )—'चुर स्तेये' इत्यस्माद्धातोः 'सत्यापपाशरूपवीणा—' इत्यादिसूत्रेण चुरादित्वात् स्वार्थे णिचि णचयोरित्संज्ञायां लोपे च कृते 'चुर् इ' इति स्थिते णिच इकारस्य 'आर्धधातुकं शेषः' इत्यार्धधातु-कत्वे 'पुगन्तलघूपधस्य च' इति गुणे 'चोरि' इति जाते 'सनाद्यन्ता धातवः' इति धातुसंज्ञायां धातुत्वाल्लुङि लः स्थाने परस्मैपदे तिपि 'लुङ्लङ्—' इत्यडागमे अनु-बन्धलोपे 'इतश्च' इति तिप इकारलोपे च्लौ 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति च्ले-श्चङि अनुबन्धलोपे 'णेरनिटि' इति णिलोपे 'अ चोर् अ त्' इति जाते 'णौ चङ्युप-धाया ह्रस्वः' इत्युपधाह्रस्वे 'चङि' इति द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्यासत्वे 'हलादिः शेषः' इत्यासरेफस्य लोपे 'अ चु चुर् अ त्' इति दशायां 'सन्वल्लघुनि चङ्परेऽ-नग्लोपे' इति सन्वद्भावे 'दीर्घो लघोः' इति अभ्यासस्य दीर्घे 'अचूचुरत्' इति । आत्मनेपदे 'अचूचुरत' इत्यपि पूर्ववदेव सिद्धं भवति ।

## चुर्धातोः पञ्चलकारेषु रूपाणि ( १९५० )—

परस्मैपदे—

| | | |
|---|---|---|
| १. लटि—चोरयति | चोरयतः | चोरयन्ति । |
| चोरयसि | चोरयथः | चोरयथ । |
| चोरयामि | चोरयावः | चोरयामः । |
| २. लिटि—चोरयाञ्चकार | चोरयाञ्चक्रतुः | चोरयाञ्चक्रुः । |
| चोरयाञ्चकर्थ | चोरयाञ्चक्रथुः | चोरयाञ्चक्र । |
| चोरयाञ्चकार–चकर | चोरयाञ्चकृव | चोरयाञ्चकृम । |
| चोरयामास | चोरयासतुः | चोरयामासुः इत्यादि । |
| चोरयाम्बभूव | चोरयाम्बभूवतुः | चोरयाम्बभूवुः ,, |
| ३. लुटि—चोरयिता | चोरयितारौ | चोरयितारः । |
| चोरयितासि | चोरयितास्थः | चोरयितास्थ । |
| चोरयितास्मि | चोरयितास्वः | चोरयितास्मः । |
| लृटि—चोरयिष्यति | चोरयिष्यतः | चोरयिष्यन्ति । |
| चोरयिष्यसि | चोरयिष्यथः | चोरयिष्यथ । |
| चोरयिष्यामि | चोरयिष्यावः | चोरयिष्यामः । |
| ५. लोटि—चोरयतु-तात् | चोरयताम् | चोरयन्तु । |
| चोरय-तात् | चोरयतम् | चोरयत । |
| चोरयाणि | चोरयाव | चोरयाम । |

आत्मनेपदे—

| | | |
|---|---|---|
| लटि—चोरयते | चोरयेते | चोरयन्ते । |
| चोरयसे | चोरयेथे | चोरयध्वे । |
| चोरये | चोरयावहे | चोरयामहे । |
| लिटि—चोरयाञ्चक्रे | चोरयाञ्चक्राते | चोरयाञ्चक्रिरे । |
| चोरयाञ्चकृषे | चोरयाञ्चक्राथे | चोरयाञ्चकृढ्वे । |
| चोरयाञ्चक्रे | चोरयाञ्चकृवहे | चोरयाञ्चकृमहे । |
| लुटि—चोरयिता | चोरयितारौ | चोरयितारः । |
| चोरयितासे | चोरयितासाथे | चोरयिताध्वे । |
| चोरयिताहे | चोरयितास्वहे | चोरयितास्महे । |

| | | |
|---|---|---|
| लृटि—चोरयिष्यते | चोरयिष्येते | चोरयिष्यन्ते । |
| चोरयिष्यसे | चोरयिष्येथे | चोरयिष्यध्वे । |
| चोरयिष्ये | चोरयिष्यावहे | चोरयिष्यामहे । |
| लोटि—चोरयताम् | चोरयेताम् | चोरयन्ताम् । |
| चोरयस्व | चोरयेथाम् | चोरयध्वम् । |
| चोरयै | चोरयावहै | चोरयामहै । |

**कथयति** ( १९२४, ५० )—अजन्तात् 'कथ' धातोः 'सत्यापपाशे'ति सूत्रेण स्वार्थे णिचि तस्यार्धधातुकत्वात्तस्मिन्परे 'अतो लोपः' इति अल्लोपे 'अत उपधायाः' इति वृद्धौ प्राप्तायाम् 'अचः परस्मिन् इत्यल्लोपस्य स्थानिवद्भावात्तदभावे धातुत्वाल्लटि तिपि शपि 'सार्वधातुकार्धधातुकयोः' इति गुणे अयादेशे तत्सिद्धिः ।

**अचकथत्** ( १९२६, ४४,४६ )—अजन्तात् 'कथ' धातोः 'सत्यापपाशे'ति स्वार्थे णिचि तस्यार्धधातुकत्वात् तस्मिन् परे अतो लोप' इत्यल्लोपे तस्य स्थानिवद्भावात् उपधावृद्ध्यभावे धातुत्वाल्लुङस्तिपि अडागमे अनुबन्धलोपे इतश्चे'ति तिप इकारलोपे च्लौ णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति चङि अनुबन्धलोपे 'णेरनिटि' इति णिच इकारलोपे चङि' इति द्वित्वे अभ्यासत्वे 'हलादिः शेषः' इति अभ्यासहलो लोपे चुत्वे अग्लोपित्वात्सन्वद्भावाऽभावेन दीर्घाऽभावे तत्सिद्धिः ।

**गणयति** ( १९३२, ४६ ) अजन्तात् 'गण' संख्याने इत्यस्माद्धातोः 'सत्यापाशे'ति सूत्रेण स्वार्थे णिचि तस्यार्धधातुकत्वात 'अतो लोपः' इत्यल्लोपे अल्लोपस्य स्थानिवद्भावात् उपधावृद्ध्यभावे धातुत्वाल्लटि तिपि शपि गुणेऽयादेश तत्सिद्धिः ।

**अजीगणत्** ( १९२१, ३३, ३६, ३८, ४२, ४५ )—अजन्तात् 'गण' धातोः 'सत्यापपाशे'ति सूत्रेण स्वार्थे णिचि णिचः आर्धधातुकत्वेन अतो लोपः' इत्यल्लोपे तस्य स्थानिवत्त्वात् वृद्ध्यभावे धातुत्वाल्लुङस्तिपि अनुबन्धलोपे इतश्चे'ति तिप इकारलोपे च्लौ णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति च्लेश्चङि 'णेरनिटि' इति णिच इकारलोपे द्वित्वे अभ्यासत्वे 'हलादिः शेषः' इत्यभ्याससम्बन्धिणकारस्य लोपे 'कुहोश्चुः' इति अभ्यासगकारस्य जकारे अज गण् अ त्' इति स्थिते अग्लोपित्वाद् दीर्घसन्वद्भावयोरभावे 'ई च गणः' इति ईत्वे 'अजीगणत्' इति। पक्षे अजगणत्' इति।

इति श्रीरामचन्द्रझाविरचितायां प्रश्नोत्तरावल्यां चुरादि ( दशगणी ) प्रकरणम् ।

# अथ ण्यन्तप्रकरणम्

**हेतुमति च ( १९५० )**—हेतुः = प्रयोजकः, आधारतया अस्यास्तीति हेतुमान्—प्रयोजकनिष्ठः प्रेषणादिव्यापारः, तस्मिन् वाच्ये णिच् स्यादित्यर्थः। उदाहरणं तु 'भावयति' इति।

**भावयति**—भूधातोः 'हेतुमति च' इति प्रेरणार्थे णिचि अनुबन्धलोपे 'अचो ञ्णिति' इति वृद्धौ आवादेशे 'सनाद्यन्ता धातवः' इति धातुत्वाल्लटि तिपि शपि अनुबन्धलोपे गुणे अयादेशे 'भावयति' इति सिद्धम्।

**ओः पुयण्ज्यपरे ( १९४४ )**—'उ' इत्यस्य 'ओः' इति षष्ठी 'पुयण्जि' इति छेदः। पुश्च यण् च ज् चेति समाहारद्वन्द्वात् सप्तमी। अः परो यस्मादिति बहुव्रीहिः। 'सन्यतः' इत्यस्मात् सनीत्यनुवर्तते। अङ्गस्येत्यधिकृतम्। 'अत्र लोपः' इत्यस्मादभ्यासस्येति, 'भृञामित्' इत्यस्मादिदिति चानुवर्तते। ततश्च 'सनि परे यदङ्गं तदवयवाभ्यासोकारस्येत्त्वं स्यात् पवर्गयण्जकारेष्ववर्णपरेषु परतः' इत्यर्थो भवति। उदाहरणं तु 'अबीभवत्' इति। अत्र 'अ बु भव् अ त्' इति स्थिते 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इत्यनेन "चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरस्तस्य सनीवकार्यं स्याण्णावग्लोपे असति' इत्यर्थपक्षे सन्वद्भावे विहिते 'पिपठिषति' इत्यत्र यथा 'सन्यतः' इत्यनेन सनि परे अङ्गावयवाऽभ्यासाऽकारस्य इत्वं भवति तथैवाऽत्रापि चङ्परे सत्यप्यनेन सन्परकबुद्धया अवर्णपरकपवर्गे ( भकारे ) परे अङ्गावयवाभ्यासोकारस्य इत्वं सिद्धम्।

भाषार्थस्त्वित्थम्—'सन् पर रहते जो अंग उसका अवयव जो अभ्यास उकार, उसको इकार हो, अवर्णपरक पवर्ग, यण् या जकारके परे। फल यह हुआ कि 'अबीभवत्' में सन्वद्भाव होने पर चङ्परक जो 'अबु भव्' यह अंग है वह सन्परक कहलाया और इस सूत्रसे अवर्णपरक पवर्ग ( भकार ) के परे उस अंगावयव अभ्यासके उकारको इत्व सिद्ध हुआ।

**अबीभवत् ( १९ २३, २७, २८, ४६, ५२ )**—भूधातोः 'हेतुमति च' इति हेत्वर्थे णिचि 'णिच्यत्र आदेशो न द्वित्वे कर्तव्ये इति निषेधात् पूर्वं वृद्धयभावे धातुत्वाल्लुङस्तिपि अनुबन्धलोपे तिप इकार लोपे च कृते 'लुङ्लङ्' इत्यटि च्लौ 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति च्लेश्चङि अनुबन्धलोपे णेरनिटि' इति णिलोपे 'चङि' इति द्वित्वे अभ्यासत्वे ह्रस्वे 'अभ्यासे चर्च' इति जश्त्वे 'अ बु भू अ त्'

इति दशायां प्रत्ययलक्षणेन वृद्धौ आवादेशे 'णौ चङ्युपधाया ह्रस्वः' इत्युपधाह्रस्वे 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इति सन्वद्भावे 'ओः पुयण्ज्यपरे' इत्यभ्यासोकारस्य इत्वे 'दीर्घो लघोः' इति दीर्घे उक्तं रूपं सिद्धम् ।

**अतिष्ठिपत्** ( १६-२१, ४४, ४५, ४८ )–'ष्ठा गतिनिवृत्तौ' इति धातुः, अत्र 'धात्वादेः षः सः' इति षस्य सत्वे ष्टुत्वनिवृत्तौ 'स्था' इति । तस्मात् 'हेतुमति च' इति णिचि 'अर्तिह्रीब्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ' इति पुकि उकि गते धातुत्वाल्लुङस्तिपि अटि अनुबन्धलोपे तिप इकारलोपे च कृते च्लौ 'णिश्रिद्रुस्रुभ्यः' इति च्लेश्चङि 'णिच्यच् आदेशो न द्वित्वे कर्तव्ये' इति निषेधात् इत्वाऽपेक्षया पूर्वं द्वित्वे अभ्यासत्वे 'शर्पूर्वाः खयः' इति सलोपे अभ्यासह्रस्वे 'अभ्यासे चर्च' इति चर्त्वे 'अ त स्थाप् इ अ त्' इति स्थिते 'णौ चङ्युपधाया ह्रस्वः' इत्युपधाह्रस्वे 'णेरनिटि' इति णिलोपे 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इति सन्वद्भावे 'सन्यतः' इति इत्वे षत्वे ष्टुत्वे 'तिष्ठते रित्' इतीत्वे 'अतिष्टिपत्' इति सिद्धम् ।

[ ननु 'ओणृ अपनयने' इत्यत्र ऋदित्करणाल्लिङ्गात् 'उपधाकार्यं द्वित्वात् प्रबलम्' इति कल्पनया पूर्वं 'तिष्ठतेरित्' इतीत्वं ततो द्वित्वमिति चेन्न, उक्तकल्पनायाः उपधाकार्यमात्रविषयकत्वात् । 'ओः पययोरिति वक्तव्ये पुयण्जीति वचनाल्लिङ्गात् 'णिच्यच आदेशो न' इति कल्पनायास्तु यत्र द्विरुक्तावभ्यासोत्तरखण्डस्याऽयोऽच् प्रक्रियायां परिनिष्ठिते रूपे वा अवर्णो लभ्यते तन्मात्रविषयकत्वमिति विशेषेणानेन सामान्यस्य तस्य बाधात् । इति भट्टोजिदीक्षितानुयायिनः पन्थाः । ]

**घटयति** ( १९४९ )—घटधातोः हेत्वर्थे णिचि 'अत उपधायाः' इति वृद्धौ घटादेर्मित्वात् 'घटादीनां ज्ञपादीनां चोपधाया ह्रस्वः स्याण्णौ परे' इत्यर्थक 'मितां ह्रस्वः' इति ह्रस्वे धातुत्वल्लटि तिपि शपि गुणेऽयादेशे तत्सिद्धिः ।

**ज्ञपयति** ( १६४७ )—ज्ञप्धातोः हेत्वर्थे णिचि 'अत उपधायाः' इति वृद्धौ ज्ञपादेर्मित्वात् 'मितां ह्रस्वः' इति ह्रस्वे धातुत्वाल्लटस्तिपि शपि गुणेऽयादेशे तत्सिद्धिः।

**अजिज्ञपत्** ( १६२४ ) ज्ञपधातोः हेत्वर्थे णिचि धातुत्वाल्लुङस्तिपि अटि अनुबन्धलोपे तिप इकारलोपे च्लौ च्लेश्चङि 'चङि' इति द्वित्वे अभ्यासकार्ये उपधावृद्धौ ह्रस्वे णिलोपे सन्वद्भावे 'सन्यतः' इतीत्वे 'अजिज्ञपत्' इति जातम् ।

इति सोत्तरायां प्रश्नावल्यां ण्यन्तप्रकरणम् ।

---

# अथ सन्नन्तप्रकरणम्

**धातोः**—इषिकर्मण इषिणैककर्तृकाद्धातोः सन् प्रत्ययो वा स्यादिच्छायामिति वृत्तिः। इच्छासमानकर्तृकत्वे सति इच्छाकर्मीभूतो यो व्यापारः तद्वाचकाद् धातोः इच्छायां सन् वा स्यादिति फलितार्थः।

**भाषार्थः**—इष् धातुका जो कर्म तद्बोधक और इष् धातुके समानकर्तृक अर्थात् इष् धातुका जो कर्ता वही कर्ता हो जिसका ऐसे धातुसे इच्छा अर्थमें सन् प्रत्यय हो, विकल्पसे। जैसे गोपालः पठितुमिच्छति–'पिपठिषति'। यहां इष् धातुका कर्ता गोपाल है और वही गोपाल पठ धातु ( पठितुम् ) का भी कर्ता है तथा इष् धातुका पठ् धातु ( पठितुम् ) कर्म भी है इस लिये पठ् धातु से सन् प्रत्यय हुआ।

**पिपठिषति** ( १९३२, ३८, ४२ )—पठ्धातोरिच्छार्थे 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' इति सनि इटि अनुबन्धलोपे 'सन्यङोः' इति द्वित्वे अभ्यासत्वे हलादिशेषे 'सन्यतः' इतीत्वे षत्वे 'सनाद्यन्ता धातवः' इति धातुत्वाल्लटि तिपि शपि अनुबन्धलोपे 'अतो गुणे' इति पररूपे उक्तं रूपं सिद्धम्।

( १ पिपठिषति २ पिपठिषाञ्चकार ३ पिपठिषिता ४ पिपठिषिष्यति। )

**जिघत्सति** ( १९२४, २७, ३४, ३६, ४४, ४६ )-अत्तुमिच्छतीत्यर्थे 'अद्' धातोः 'धातोः कर्मणः–' इति सनि 'लुङ्सनोर्घस्लृ' इति अदो घस्लादेशे अनुबन्धलोपे 'एकाच उपदेशेऽनुदात्तात्' इति इटो निषेधे 'सन्यङोः' इति द्वित्वे अभ्यासत्वे 'हलादिः शेषः' इत्यभ्याससकारस्य लोपे 'कुहोश्चुः' इत्यभ्यासघकारस्य झत्वे 'अभ्यासे चर्च' इति झस्य जत्वे 'सन्यतः' इत्यभ्यासाऽकारस्य इत्वे 'सः स्यार्धधातुके' इति सस्य तकारे 'सनाद्यन्ता धातवः' इति धातुत्वाल्लटि तिपि शपि अनुबन्धलोपे 'अतो गुणे' इति पररूपे उक्तं रूपं निष्पन्नम्।

**चिकीर्षति**—( १९२१, २५, ३१, ३३, ४५, ४८, ५० )—कर्तुमिच्छतीति विग्रहे कृधातोः 'धातोः कर्मणः–' इति सनि अनुबन्धलोपे 'एकाच उपदेशेऽनुदात्तात्' इतीण्निषेधे 'अज्झनगमां सनि' इति दीर्घे 'इको झल्' इति कित्वाद्गुणाऽभावे 'ऋत इद्धातोः' इति इत्वे रपरत्वे 'किर्स्' इति स्थिते 'सन्यङोः' इति द्वित्वे अभ्यासत्वे 'हलादिः शेषः' इत्यभ्यासरेफस्य लोपे 'कुहोश्चुः' इति चुत्वे 'हलि च' इति दीर्घे षत्वे 'सनाद्यन्ता धातवः' इति धातुत्वाल्लटि तिपि शपि अनुबन्धलोपे पररूपे 'चिकीर्षति' इति जातम्।

बुभूषति ( १६२२, ३०, ३५, ४१, ४७, ४६, ५१ )—भूधातोः इच्छार्थे सनि 'सनि ग्रहगुहोश्च' इति इण्निषेधे 'इको झल्' इति कित्त्वाद्गुणाऽभावे 'सन्यङोः' इति द्वित्वे अभ्यासत्वे 'ह्रस्वः' इत्यभ्यासोकारस्य ह्रस्वे 'अभ्यासे चर्च' इति अभ्यासभकारस्य बत्वे षत्वे 'सनाद्यन्ताः' इति धातुत्वाल्लटि तिपि शपि अनुबन्धलोपे पररूपे 'बुभूषति' इति ।

इति सोत्तरायां प्रश्नावल्यां सन्नन्तप्रकरणम् ।

# अथ यङन्तप्रकरणम्

बोभूयते ( १९३२, ४८ )—पुनः पुनः अतिशयेन वा भवतीति विग्रहे भूधातोः 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' इति यङि 'सन्यङोः' इति द्वित्वे अभ्यासत्वे ह्रस्वे 'गुणो यङ्लुकोः' इत्यभ्यासोकारस्य गुणे 'सनाद्यन्ता धातवः' इति धातुत्वाल्लटि ङित्वादात्मनेपदे तप्रत्यये शपि अनुबन्धलोपे पररूपे टेरेत्वे उक्तं रूपं सिद्धम् ।

अबोभूयिष्ट ( १९२६ )—भुधातोः 'धातोरेकाचः–' इति यङि 'सन्यङोः' इति द्वित्वे अभ्यासत्वे ह्रस्वे 'गुणो यङ्लुकोः' इति गुणे 'अभ्यासे चर्च' इति भस्य बत्वे 'सनाद्यन्ताः–' इति धातुत्वाल्लुङि ङित्वादात्मनेपदे तप्रत्यये अटि च्लौ च्लेः सिचि इटि अनुबन्धलोपे 'अतो लोपः' इत्यल्लोपे षत्वे ष्टुत्वे तत्सिद्धिः ।

वाव्रज्यते ( १९४७, ५२ )—कुटिलं व्रजतीति विग्रहे व्रज्धातोः 'नित्यं कौटिल्ये गतौ' इति यङि 'सन्यङोः' इति द्वित्वे अभ्यासत्वे हलादिशेषे 'दीर्घोऽकितः' इत्याभ्यासस्य दीर्घे 'सनाद्यन्ताः' इति धातुत्वाल्लटि तप्रत्यये शपि अनुबन्धलोपे पररूपे टेरेत्वे उक्तं रूपं जातम् ।

वाव्रजाञ्चक्रे ( १९२१ )—व्रज्धातोर्यङि द्वित्वे अभ्यासकार्ये 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घे 'सनाद्यन्ताः–' इति धातुत्वाल्लिटि अनेकाच्त्वादाम्प्रत्यये 'वाव्रज् य आम् लिट्' इति स्थिते 'आदेः परस्ये'ति सहकारेण 'यस्य हलः' इति यलोपे 'अतो लोपः' इत्यल्लोपे 'आमः' इति लिटो लुकि लिट्परककृञोऽनुप्रयोगे 'वाव्रज् आम् कृ लिट्' इति स्थिते लिटो लस्थाने तप्रत्यये तस्य एशि 'लिटि धातोरनभ्यासस्य' इति कृञो द्वित्वे अभ्यासकार्ये मस्यानुस्वारे परसवर्णे यणि 'वाव्रजाञ्चक्रे' इति ।

**वरीवृत्यते** ( १९२८ )—वृत्धातोर्यङि द्वित्वे अभ्यासत्वे 'उरत्' इत्यत्वे रपरे हलादिशेषे 'व वृत् य' इति जाते 'रीगृदुपधस्य च' इत्यभ्यासस्य रीगागमे धातुत्वाल्लटि तप्रत्यये शपि पररूपे टेरेत्वे तत्सिद्धिः ।

**वरीवृताञ्चक्रे** ( १९२७ )—वृत्धातोर्यङि द्वित्वादिकार्ये 'रीगृदुपधस्य च' इति अभ्यासस्य रीगागमे धातुत्वाल्लिटि अनेकाच्त्वादाम्प्रत्यये 'आदेः परस्य' इति सहकारात् 'यस्य हलः' इति यलोपे 'अतो लोपः' इत्यल्लोपे 'आमः' इति लिटो लुकि लिट्परकृञोऽनुप्रयोगे लिटःस्थाने तप्रत्यये तस्य एशि कृञो द्वित्वे अभ्यासकार्ये मस्यानुस्वारे परसवर्णे 'यणि' रूपं सिद्धम् ।

**नरीनृत्यते** ( १९२२, ४६, ४९ )—पुनः पुनरतिशयेन वा नृत्यतीति विग्रहे 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' इति यङि 'सन्यङोः' इति द्वित्वे अभ्यासकार्ये 'रीगृदुपधस्य च' इति रीगागमे धातुत्वाल्लटस्तप्रत्यये एत्वे शपि पररूपे 'क्षुभ्नादिषु च' इति णत्वनिषेधे तत्सिद्धिः ।

इति सोत्तरायां प्रश्नावल्यां यङन्तप्रकरणम् ।

---

# अथ यङ्लुगन्तप्रकरणम्

**यङोऽचि च** ( १९४८ ) 'यङोऽचि प्रत्यये लुक् स्यात् चकारात्तं विनापि क्वचित्' इति वृत्तिः । एवं च अच्प्रत्यये तदभावेऽपि यङो बहुलं लुगिति फलितम् ।

**यङो वा** ( १९४९ )—यङ्लुगन्तात्परस्य हलादेः पितः सार्वधातुकस्य ईड्वा स्यादित्यर्थः ।

**बोभवीति** ( १९४४, ५० )—भूधातोर्यङि 'यङोऽचि च' इति द्वित्वापेक्षया आदौ यङो लुकि ततः प्रत्ययलक्षणेन यङन्तत्वाद् 'सन्यङोः' इति द्वित्वे अभ्यासत्वे 'गुणो यङ्लुकोः' इत्यभ्यासोकारस्य गुणे 'अभ्यासे चर्च' इत्यभ्यासभकारस्य बकारे 'बोभू' इति, तस्माद्धातुत्वाल्लटि तिपि शपि 'चर्करीतञ्च' इति यङ्लुगन्तस्यादादौ पाठाच्छपो लुकि 'यङो वा' इति पाक्षिके ईडागमे अनुबन्धलोपे 'बोभूतु तेतिक्ते' इति छन्दसि निपातनात् 'भुसुवोस्तिङि' इति गुणनिषेधस्य यङ्लुकि भाषायामप्रवृत्त्या गुणेऽवादेशे 'बोभवीति' इति । ईडभावपक्षे गुणे 'बोभोति' इति भवति ।

**बोभवाञ्चकार** ( १९३७, ४५ )—भूधातोर्यङि 'यङोऽचि च' इति यङो लुकि प्रत्ययलक्षणेन यङ्न्तत्वात् 'सन्यङोः' इति द्वित्वे अभ्यासत्वे 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणे 'अभ्यासे चर्च' इति भस्य बत्वे धातुत्वाल्लिटि 'कास्यनेकाच आम्वक्तव्यः' इत्यामि 'आमः' इति लिटो लुकि लिट्परककृञोऽनुप्रयोगे लिटः स्थाने तिपि णलि अनुबन्धलोपे गुणेऽवादेशे कृञो द्वित्वे अभ्यासत्वे 'उरत्' इत्यत्वे 'कुहोश्चुः' इति चुत्वे 'अचो ञ्णिति' इति वृद्धौ मस्यानुस्वारे परसवर्णे तत्सिद्धम् ।

**बोभूयात्** ( १९३८ ) भूधातोर्यङि यङो लुकि प्रत्ययलक्षणेन यङ्न्तत्वाद् 'सन्यङोः' इति द्वित्वे अभ्यासत्वे 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणे 'अभ्यासे चर्च' इत्यभ्यासभकारस्य बत्वे धातुत्वाद्विधिलिङि तिपि यासुटि अनुबन्धलोपे तिप इकार लोपे 'लिङः सलोपोऽनन्त्यस्य' इति सलोपे 'बोभूयात्' इति सिद्धम् ।

**अबोभूवीत्, अबोभोत्** ( १९२१, २४, ३९ )—भूधातोर्यङि यङो लुकि प्रत्ययलक्षणेन यङ्न्तत्वात् 'सन्यङोः' इति द्वित्वे अभ्यासत्वे 'गुणो यङ्लुकोः' इत्यभ्यासगुणे जश्त्वे धातुत्वाल्लुङस्तिपि इकारलोपे अटि अनुबन्धलोपे च्लौ च्लेः सिचि 'गातिस्थे'ति सिचो लुकि 'यङो वा' इति पाक्षिके ईटि गुणं बाधित्वा नित्यत्वाद् वुकि 'अबोभूवीत्' इति ईडभावपक्षे अच्परत्वाऽभावाद् वुगभावे गुणे 'अबोभोत्' इति च भवति ।

**अबोभवुः** ( १९४० )—भूधातोर्यङि यङो लुकि प्रत्ययलक्षणेन यङ्न्तत्वाद् द्वित्वे अभ्यासत्वे 'गुणो यङ्लुकोः' इत्यभ्यासगुणे 'अभ्यासे चर्च' इति भस्य बत्वे धातुत्वाल्लुङि तत्स्थाने झिप्रत्यये अटि च्लौ च्लेः सिचि 'गातिस्थे'ति सिचो लुकि गुणं बाधित्वा नित्यत्वाद् वुकि 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुसादेशे सस्य रुत्वे विसर्गे 'अबोभूवुः' इति ।

**अबोभविष्यत्** ( १९२७ )—भूधातोर्यङि यङो लुकि प्रत्ययलक्षणेन यङ्न्तत्वाद् 'सन्यङोः' इति द्वित्वे अभ्यासत्वे अभ्यासगुणे 'अभ्यासे चर्च' इति अभ्यासभकारस्य बत्वे धातुत्वाल्लृङि तिपि अडागमे अनुबन्धलोपे तिप इकारलोपे स्यप्रत्यये 'आर्धधातुकस्येड्वलादेः' इति इटि अनुबन्धलोपे गुणेऽवादेशे सस्य षत्वे उक्तं रूपं सिद्धम् ।

इति सोत्तरायां प्रश्नावल्यां यङ्लुगन्तप्रकरणम् ।

# अथ नामधातुप्रकरणम्

**पुत्रीयति** ( १९३२, ४४, ४९ )—आत्मनः पुत्रमिच्छतीति विग्रहे 'पुत्र अम्' इति सुबन्तात् 'सुप आत्मनः क्यच्' इति क्यचि अनुबन्धलोपे 'सनाद्यन्ता धातवः' इति 'पुत्र अम् य' इत्यस्य धातुसंज्ञायां 'सुपो धातुप्रातिपदिकयोः' इति अमो लुकि 'क्यचि च' इति अकारस्य ईत्वे 'पुत्रीय' इति, तस्माद्धातुत्वाल्लटि तिपि शपि पररूपे 'पुत्रीयति' इति निष्पन्नम् ।

**राजीयति** ( १९३१, ५१, ५२ )—'राजानमिच्छति' इति विग्रहे द्वितीयान्तात् राजञ्छब्दादिच्छार्थे क्यचि धातुत्वात् सुपो लुकि 'न क्ये' इति सूत्रेण 'राजन्' इत्यस्य पदत्वात् 'न लोपः प्रातिपदिकान्तस्य' इति नलोपे 'क्यचि च' इतीत्वे 'राजीय' इति, तस्माद्धातुत्वाल्लटि शपि अनुबन्धलोपे पररूपे 'राजीयति' इति जातम् ।

**वाच्यति** ( १९२१ )—वाचमिच्छतीति विग्रहे द्वितीयान्तात् वाच्शब्दात् क्यचि धातुत्वात्सुपो लुकि 'नः क्ये' इति नान्तस्यैव पदत्वनियमात् 'वाच्' इत्यस्य पदत्वाऽभावात् कुत्वाऽभावे धातुत्वाल्लटि तिपि शपि पररूपे 'वाच्यति' इति ।

**समिधिता** ( १९४५ ) समिधमिच्छतीति विग्रहे द्वितीयान्तात् समित् शब्दात् क्यचि धातुत्वात्सुब्लुकि 'नः क्ये' इति नान्तस्यैव पदत्वनियमात् पदत्वाऽभावेन जश्त्वाऽभावे धातुत्वाल्लुटि लुटस्तिबादिकार्ये 'समिध्य ता' इति दशायाम् इटि 'क्यस्य विभाषा' इति यलोपे 'अतो लोपः' इत्यल्लोपे अल्लोपस्य स्थानिवत्वाद् लघूपधगुणाऽभावे 'समिधिता' इति । यलोपाऽभावपक्षे 'समिध्यिता' इति च भवति ।

**सस्वौ**—स्व इव आचरतीति विग्रहे 'सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः' इति क्विपि क्विपो लोपे धातुत्वाल्लिटस्तिपि तिपो णलि द्वित्वे अभ्यासत्वे हलादिशेषे 'सस्व अ' इति दशायाम् 'अचो ञ्णिति' इति वृद्धौ 'सस्वा अ' इति भूते 'आत औ णलः' इति णलः औकारे 'वृद्धिरेचि' इति वृद्धौ 'सस्वौ' इति जातम् ।

**इदामति** ( १९२३, ४१, ४६ )—'इदमिवाचरति' इति विग्रहे 'सर्वप्रातिपदिकेभ्यः–' इति क्विपि तस्य लोपे धातुत्वाल्लटस्तिपि शपि 'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घे 'इदामति' इति ।

**राजानति** ( १९२१, ४० )—राजा–इव–आचरतीति विग्रहे 'सर्वप्रातिपदि-

केभ्यः–' इति क्विपि क्विपः सर्वापहारे धातुत्वाल्लटस्तिपि शपि 'अनुनासिकस्य–' इति दीर्घे तत्सिद्धम् ।

**कष्टायते** ( १९४८, ५० )—'कष्टाय क्रमते' इति विग्रहे चतुर्थ्यन्तात् कष्टशब्दात् 'कष्टाय क्रमणे' इति क्यङि धातुत्वात् सुपो लुकि ङित्वादात्मनेपदे लटः स्थाने तप्रत्यये टेरेत्वे शपि पररूपे 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घे उक्तं रूपं सिद्धम् ।

**शब्दायते** ( १९२७ )—शब्दं करोति इति विग्रहे 'शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे' इत्यमन्तशब्दशब्दात् क्यङि धातुत्वादमो लुकि ङित्वादात्मनेपदे लटस्तप्रत्यये टेरेत्वे शपि पररूपे 'अकृत्सार्वधातुकयोः' इति दीर्घे तत्सिद्धम् ।

**घटयति**—घटं करोत्याचष्टे वेति विग्रहे घटशब्दात् 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इति णिचि इष्ठवद्भावाट्टिलोपे च जाते तस्य स्थानिवद्भावादुपधावृद्ध्यभावे धातुत्वाल्लटि तिपि शपि गुणे अयादेशे च कृते घटयति' इति

इति सोत्तरायां प्रश्नावल्यां नामधातुप्रकरणम् ।

---

# अथ आत्मनेपदप्रकरणम्

**व्यतिघ्नन्ति** ( १९३० )—वि × अति = व्यति–पूर्वाद् हन्धातोः 'कर्तरि कर्मव्यतिहारे' इति क्रियाविनिमयेऽर्थे आत्मनेपदे प्राप्ते 'न गतिहिंसार्थेभ्यः' इति निषेधे लडादिकार्ये विहिते तत्सिद्धिः ।

**निविशते** ( १९४७,४९,५० )—निपूर्वकाद् विश्धातोः, निपूर्वकाद् विशधातोरात्मनेपदं स्यादित्यर्थक 'नेर्विशः' इति सूत्रेण आत्मनेपदे लडादिकार्ये तत्सिद्धिः ।

**विजयते** ( १९४० ) विपूर्वक 'जि' धातोः 'विपराभ्यां जेः' इत्यात्मनेपदे लडादिके कार्ये विहिते उक्तं रूपं सिद्धम् ।

**सन्तिष्ठते, अवतिष्ठते, प्रतिष्ठते** ( १९२५, ३० ३५ ) अत्र सर्वत्र 'समवप्रविभ्यः स्थः' इत्यनेनात्मनेपदं भवतीति विशेषः ।

**सर्पिषो जानीते** ( १९४५ ) 'अकर्मकाच्च' इति सूत्रेणात्र आत्मनेपदं भवति 'सर्पिषो जानीते' इत्यस्य सर्पिषोपायेन प्रवर्तत इत्यर्थः ।

**धर्ममुच्चरते** ( १९४० )—उत्पूर्वकचरधातोः 'उदश्चरः सकर्मकात्' इत्यात्मनेपदे लडादिकार्ये तत्सिद्धिः । धर्ममुल्लंघ्य गच्छतीत्यर्थः ।

**रथेन सञ्चरते** ( १९४०, ५२ )—संपूर्वकात् 'चर्' धातोः 'समस्तृतीयायुक्तात्', इत्यनेनात्मनेपदे लडादिकार्ये तत्सिद्धिः ।

**दास्या संयच्छते कामी**—अत्र 'अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया' इति वार्तिकेन 'दास्या' इत्यत्र चतुर्थ्यर्थे तृतीया । ततश्च 'दास्येति तृतीयान्तयुक्तात्सम्पूर्वकाद् दाण्धातोः 'दाणश्च सा चेच्चतुर्थ्यर्थे' इत्यात्मनेपदे लडादिकार्ये तत्सिद्धिः ।

**एदिधिषते** ( १९२२ ) एध्धातोः सनि इटि द्वित्वे अभ्यासत्वे जश्त्वे षत्वे 'एदिधिष' इति सन्नन्तस्य धातुसंज्ञायां लटि 'पूर्ववत्सनः' इत्यनेन सन्प्रकृतेरेधधातोरात्मनेपदित्वात्तत्प्रकृतिकसन्नन्तादप्यात्मनेपदे लटस्तप्रत्यये शपि पररूपे टेरेत्वे 'एदिधिषते' इति सिद्धम् ।

**निविविक्षते**—निपूर्वकाद् विश्धातोः सनि 'हलन्ताच्च' इति सनः कित्वाद्गुणाऽभावे 'सन्यङोः' इति द्वित्वे अभ्यासत्वे हलादिशेषे 'व्रश्चे'ति षत्वे षस्य कत्वे सनः सस्य षत्वे 'निविविक्ष' इति सन्नन्तस्य धातुसंज्ञायां 'पूर्ववत्सनः' इत्यात्मनेपदे लटस्तप्रत्यये शपि पररूपे टेरेत्वे उक्तं रूपं सिद्धम् ।

**एधोदकस्योपस्कुरुते** ( १९३०, ५१ )—अत्र 'गन्धनाऽवक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः' इति सूत्रेण प्रतियत्नेऽर्थे आत्मनेपदं भवतीति विशेषः । प्रतियत्नः = गुणाधानम् । 'अवोदैधौद्मप्रश्रथहिमश्रथाः' इति सूत्रे निपातितः एधशब्दोऽदन्तः । एधश्च उदकं चेति एधोदकं तस्य = एधोदकस्य, उपस्कुरुते गुणमाधत्ते इत्यर्थः ।

इति सोत्तरायां प्रश्नावल्यामात्मनेपदप्रकरणम् ।

---

# अथ परस्मैपदप्रकरणम्

**अनुकरोति** ( १९४८ )—अनूपसर्गात् कृधातोः 'अनुपराभ्यां कृञः' इति परस्मैपदत्वाल्लटस्तिबादिकार्ये तत्सिद्धिः ।

**अभिक्षिपति** ( १९२२ )—अभ्युपसर्गात् क्षिप्धातोः 'अभिप्रत्यतिभ्यः क्षिपः' इति परस्मैपदत्वाल्लटस्तिबादिकार्ये उक्तं रूपं निष्पन्नम् ।

**प्रवहति** ( १९४९ )—प्रोपसर्गात् 'वह्धातोः 'प्राद्वहः' इति परस्मैपदत्वाल्ल-टः स्थाने तिबादिकार्ये तत्सिद्धिः ।

**विरमति** ( १९२१, ४२, ४७, ५० )—वीत्युपसर्गात् रम्धातोः 'व्याङ्प-रिभ्यो रमः' इति परस्मैपदत्वाल्लटस्तिपि शपि 'विरमति' इति ।

इति सोत्तरायां प्रश्नावल्यां परस्मैपदप्रकरणम् ।

---

# अथ भावकर्मप्रकरणम्

**भूयते** ( १९४९ ) भूधातोर्भावे लटि 'भावकर्मणोः' इत्यात्मनेपदे लटस्तप्रत्यये टेरेत्वे सार्वधातुकसंज्ञायां 'सार्वधातुके यक्' इति यकि कित्त्वाद्गुणाभावे 'भूयते' इति । त्वत्कर्तृकमन्यकर्तृकं वा भवनमित्यर्थः ।

**भाविता** ( १९२०, ३०, ४१ )—भूधातोर्भावे लुटि 'भावकर्मणोः' इत्यात्मने-पदे लुटस्तप्रत्यये तासि डादेशे डित्वसामर्थ्यादभस्याऽपि टेर्लोपे 'स्यसिच्सीयुट्ता-सिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च' इति विभाषया चिण्वद्भावे इटि च कृते चिण्वद्भावाद् वृद्धौ आवादेशे 'भाविता' इति । चिण्वदभावपक्षे इटि गुणे अवादेशे भवितेति । ण्यन्तात् 'भावि' इत्यस्मात् कर्मणि प्रत्ययेऽपि 'भाविता' इति भवति । तत्र चिण्वद्भावे इटि च कृते तस्याभीयत्वेनासिद्धत्वाण्णिलोप इति विशेषः । अत्र चिण्वदभावपक्षे इटि गुणे अयादेशे 'भावयिता' इति बोध्यम् ।

**भाविषीष्ट** ( १९२० )—भूधातोर्भावे आशीर्लिङि 'भावकर्मणोः' इत्यात्मने-पदत्वाल्लिङस्तप्रत्यये सीयुटि 'सुट् तिथोः' इति सुटि 'लोपो व्योर्वलि' इति यलोपे 'स्यसिचसीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च' इति विभा-षया चिण्वद्भावे इटि च कृते वृद्धौ आवादेशे उभयोः सकारयोः षत्वे ष्टुत्वे 'भावि-षीष्ट' इति । चिण्वदभावे तु 'भविषीष्ट' इति । अत्र गुणावादेशौ इति विशेषः । ण्यन्तात् 'भावि' इत्यस्मात् कर्मणि प्रत्ययेऽपि 'भाविषीष्ट' भावयिषीष्ट' इति भवति । अत्र चिण्वद्भावे इटि च कृते तस्याभीयत्वेन असिद्धत्वाण्णिलोपो भवति, चिण्व-दभावे तु इटि कृते गुणायादेशौ भवतः । इति विशेषः ।

**अभावि**—भूधातोर्भावे लुङि 'भावकर्मणोः' इत्यात्मनेपदे लुङस्तप्रत्यये अटि च्लौ 'चिण् भावकर्मणोः' इति च्लेश्चिणि वृद्धौ आवादेशे 'चिणो लुक्' इति तलोपे 'अभावि' इति ।

**भाव्यते**—भूधातोर्णिचि वृद्धौ आवादेशे 'भावि' इति। तस्मात् कर्मणि लटि 'भावकर्मणोः' इत्यात्मनेपदे लटस्तप्रत्यये टेरेत्वे 'सार्वधातुके यक्' इति यकि 'णेरनिटि' इति णिलोपे 'भाव्यते' इति।

**भावयाञ्चक्रे**—ण्यन्ताद् 'भावि' इत्यस्माद्धातोः कर्मणि लिटि कास्यनेकाजित्यामि णिलोपं प्रबाध्य 'अयामन्ते'ति णेरयादेशे 'आमः' इति लिटो लुकि आमन्तलिट्परककृञोऽनुप्रयोगे लिटस्तादेशे तस्य एशि द्वित्वादिकार्ये मस्यानुस्वारे परसवर्णे यणि 'भावयाञ्चक्रे' इति सिद्धम्।

**बुभूष्यते**—सन्नन्तात् 'बुभूष' इत्यस्माद्धातो र्भावे लटि 'भावकर्मणोः' इत्यात्मनेपदत्वाल्लटस्तप्रत्यये टेरेत्वे सार्वधातुके यक्' इति यकि 'अतो लोपः' इति सनोऽकारस्य लोपे 'बुभूष्यते' इति।

**बोभूय्यते**—यङन्तात् 'बोभूय' इत्यस्माद्धातोर्भावे लटि 'भावकर्मणोः' इत्यात्मनेपदत्वाल्लटस्तप्रत्यये टेरेत्वे 'सार्वधातुके यक्' इति यकि 'अतो लोपः' इति यङोऽकारस्य लोपे 'बोभूय्यते' इति।

**अस्तावि** ( १९३८, ४० )—'ष्टु' इत्यत्र षस्य सत्वे ष्टुत्वनिवृत्तौ 'स्तु' इति। तस्मात् कर्मणि लुङि 'भावकर्मणोः' इत्यात्मनेपदत्वाल्लुङस्तप्रत्यये अटि च्लौ 'चिण् भावकर्मणोः' इति च्लेश्चिणि वृद्धौ आवादेशे 'चिणो लुक्' इति तस्य लुकि 'अस्तावि' इति।

**आरिता** ( १९४५ )—ऋधातोः कर्मणि लुटि 'भावकर्मणोः' इत्यात्मनेपदत्वाल्लुटः स्थाने तप्रत्यये तासि 'स्यसिच्' इति चिण्वदिटि चिण्वद्भावाद् 'अचो ञ्णिति' इति वृद्धौ रपरत्वे तस्य डादेशे डित्वादभस्यापि टेर्लोपे 'आरिता' इति। चिण्वदिडभावपक्षे गुणे 'अर्ता' इति।

**इज्यते** ( १९३१ )—यज्धातोः कर्मणि लटि 'भावकर्मणोः' इत्यात्मनेपदे लटस्तप्रत्यये टेरेत्वे 'सार्वधातुके यक्' इति यकि 'वचिस्वपियजादीनां किति' इति सम्प्रसारणे पूर्वरूपे 'इज्यते' इति।

**तायते** ( १९२१ )—तन्धातोः कर्मणि लटस्तप्रत्यये यकि 'तनोतेर्यकि' इत्यात्वे सवर्णदीर्घे 'तायते' इति। आत्वाऽभावपक्षे 'तन्यते' इति।

**अन्वतप्त**—'अनु' पूर्वात् तप्धातोः कर्मणि लुङस्तप्रत्यये अटि यणि च्लौ 'चिण् भावकर्मणोः' इति च्लेश्चिणि प्राप्ते 'तपोऽनुतापे च' इति तन्निषेधे च्लेः सिचि 'झलो झलि' इति सलोपे 'अन्वतप्त, पापेन' इति। पापेनेति कर्तरि तृतीया। ननु अनुपूर्वस्य तपेः पश्चात्तापार्थकत्वे असंगतिः, नहि पापस्य सूर्यादिवत्तपनशक्तिरस्ति,

शोकार्थकत्वे तु अकर्मकत्वापत्त्या कर्मणि लकार एव न स्यादिति चेन्न, अनुपूर्वकस्य तप्धातोः उपसर्गवशात् अभिहननार्थके प्रवर्तमानत्वेन सकर्मकत्वस्य जागरूकत्वात् ।

**दायिता** ( १९२४ ) दाधातोः कर्मणि आत्मनेपदे लुटस्तप्रत्यये तासि 'स्यसिचूसीयुट्' इति चिण्वदिटि 'आतो युक् चिण्कृतोः' इति युकि डादेशे डित्वसामर्थ्यादभस्यापि टेर्लोपे 'दायिता' इति । चिण्वदिडभावे तु 'दाते'ति ।

**दायिषीष्ट** ( १९२८ ) दाधातोः कर्मणि आत्मनेपदे आशीर्लिङस्तप्रत्यये सीयुटि सुटि 'स्यसिचूसीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च' इति चिण्वदिटि 'आतो युक् चिण्कृतोः' इति युकि द्वयोः सकारयोः षत्वे ष्टुत्वे 'दायिषीष्ट' इति पक्षे 'दासीष्ट' इति ।

**अभाजि** ( १९२७, ४६, ४७, ५० )—भन्ज्धातोः कर्मणि आत्मनेपदे लुङस्तप्रत्यये अटि च्लौ 'चिण् भावकर्मणोः' इति च्लेश्चिणि 'भञ्जेश्च चिणि' इति पाक्षिके नलोपे 'अत उपधायाः' इति वृद्धौ 'चिणो लुक्' इति तलोपे 'अभाजि' इति । पक्षे 'अभञ्जि' इति ।

**अलम्भि** ( १९२२, २९, ४८ )—लभ्धातोः कर्मणि आत्मनेपदे लुङस्त प्रत्यये अटि च्लौ 'चिण् भावकर्मणोः' इति च्लेश्चिणि 'चिणो लुक्' इति तलोपे 'विभाषा चिण्णमुलोः' इति नुमि अनुस्वारे परसवर्णे 'अलम्भि' इति । नुमोऽभावे उपधावृद्धौ 'अलाभि' इति ।

इति सोत्तरायां प्रश्नावल्यां भावकर्मप्रकरणम् ।

---

# अथ कर्मकर्तृप्रकरणम्

**पच्यते फलम्** ( १९४५ ५० )—गोपालः फलं पचतीत्यत्र गोपालस्य कर्तृत्वेन अविवक्षायां फलरूपस्य कर्मण एव कर्तृत्वेन विवक्षायां 'पच्' धातोरकर्मकत्वात् कर्तरि लटि लटः कर्तुरुक्तत्वात् प्रथमायां 'कर्मवत्कर्मणा तुल्यक्रियः' इति फलस्य कर्तुः कर्मवद्भावात् 'भावकर्मणोः' इत्यात्मनेपदे लटस्तप्रत्यये टेरेत्वे 'सार्वधातुके यक्' इति यकि 'पच्यते फलम्' इति सिद्धम् ।

**भिद्यते काष्ठम्** ( १९२१, ५ )—रथकारः काष्ठं भिनत्तीत्यत्र रथकारस्य कर्तृत्वेन अविवक्षायां काष्ठरूपस्य कर्मण एव कर्तृत्वेन विवक्षायां 'भिद्' धातोरकर्म-

कत्वात् कर्तरि लटि लटा कर्तुरुक्तत्वात् प्रथमायां 'कर्मवत्कर्मणा तुल्यक्रियः' इति काष्ठस्य कर्तुः कर्मवद्भावात् 'भावकर्मणोः' इत्यात्मनेपदे लटः स्थाने तप्रत्यये टेरेत्वे 'सार्वधातुके यक्' इति यकि 'भिद्यते' काष्ठम्' इति जातम् । ( भावे तु काष्ठस्य कर्तुरनुक्तत्वात्तत्र तृतीयायां 'भिद्यते काष्ठेन' इति भवति )

इति सोत्तरायां प्रश्नावल्यां कर्मकर्तृप्रकरणम् ।

---

# अथ लकारार्थप्रकरणम्

**स्मरसि कृष्ण ! गोकुले वत्स्यामः (१९३५, ५१)**—स्मरसीत्युपपदात् 'वस्' धातोर्भूतानद्यतने लङि प्राप्ते तम्प्रबाध्य 'अभिज्ञावचने लृट्' इति लृटि तत्स्थाने मसि 'स्यतासी लृलुटोः' इति स्यप्रत्यये 'सः स्यार्धधातुके' इति सस्य तकारे 'अतो दीर्घो यञि' इति दीर्घे सस्य रुत्वे विसर्गे तत्सिद्धिः ।

**यजति स्म युधिष्ठिर (१९२१, ४६, ५०, ५२)**—अत्र 'स्म' शब्दो भूतकालद्योतकः । ततश्च यज्धातोः लिटि प्राप्ते तम्प्रबाध्य 'लट् स्मे' इति स्मयोगे लटि तिपि शपि तत्सिद्धिः ।

**कदा आगतोऽसि**—कदा आगतोऽसि ! इति प्रश्ने अयमागच्छामि, इत्युत्तरम् । अत्र गम्धातोर्भूते लुङि प्राप्ते वर्तमानसामीप्यात्तं प्रबाध्य 'वर्तमानसामीप्ये वर्तमानवद् वा' इति वर्तमानवद्भावात् लटि तिबादिकार्ये 'अयम्–आगच्छामि' इति भवति । लटोऽभावपक्षे तु लुङि 'अयम्–आगमम्' इत्यपि सिद्धं भवति ।

**कदा गमिष्यसि ! एष गच्छामि ( १९४५ )**—कदा गमिष्यसीति प्रश्ने एष गच्छामीत्युत्तरम् । अत्र भूधातोः भविष्यति लृटि प्राप्ते तम्प्रबाध्य 'वर्तमानसामीप्ये वर्तमानवद्वा' इति वर्तमानवद्भावाद् लटि तत्स्थाने मिपि शपि 'इषुगमियमां छः' इति छत्वे तुकि श्चुत्वे 'अतो दीर्घो यञि' इति दीर्घे तत्सिद्धिः ।

**कृष्णं नमेच्चेत् सुखं यायात्**—अत्र कृष्णनमस्कारः सुखहेतुरिति हेतुहेतुमद्भावसत्त्वात् नम' धातोः 'या' धातोश्च भविष्यति लृटि प्राप्ते तम्बाधित्वा 'हेतुहेतुमतोर्लिङ्' इति लिङि तिबादिकार्ये तत्सिद्धिः ।

इति श्रीरामचन्द्रझा व्याकरणाचार्यविरचितायां सोत्तरायां प्रश्नावल्यां लकारार्थे तिङन्तप्रकरणं समाप्तम् ।

---

# अथ कृदन्ते कृत्यप्रकरणम्

एधितव्यम् ( १९४३ )—एध्धातोः 'कर्तरि कृत्' इति सूत्रं प्रबाध्य 'तयोरेव कृत्यक्तखलर्थाः' इति नियमाद्भावे 'तव्यत्तव्यानीयरः' इति तव्यप्रत्यये 'आर्धधातुकस्येड्वलादेः' इति इटि 'एधितव्य' इति स्थिते 'कृत्तद्धितसमासाश्च' इति प्रातिपदिकसंज्ञायां सौ 'भावे औत्सर्गिकं क्लीबत्वम्' इति क्लीबत्वात् सोरमि पूर्वरूपे 'एधितव्यम्' इति सिद्धम् ।

चेयम्—चेतुं योग्यं चेयम् । चिधातोः 'अचो यत्' इति यत्प्रत्यये 'आर्धधातुकं शेषः' इति तस्यार्धधातुकत्वे गुणे कृदन्तत्वात् सौ सोरमि पूर्वरूपे तत्सिद्धिः ।

देयम् ( १९३३ )—दातुं योग्यं-देयम् । दाधातोः 'अचो यत्' इति यत्प्रत्यये 'ईद्यति' इति धातोराकारस्य ईकारे यतः आर्धधातुकत्वात् 'सार्वधातुकार्धधातुकयोः' इति गुणे कृदन्तत्वात्सौ अमि पूर्वरूपे तत्सिद्धिः ।

ग्लेयम् (१९४४)—ग्लातुं योग्यं-ग्लेयम् । ग्लैधातोः 'अचो यत्' इति भावे यत्प्रत्यये 'आदेच उपदेशेऽशिति' इति ग्लैधातोराकारान्तादेशे 'ईद्यति' इति ईत्वे यतः आर्धधातुकत्वात् गुणे कृदन्तत्वात् सौ अमि पूर्वरूपे 'ग्लेयम्' इति ।

शप्यम् ( १९२९ ) शप्तुं योग्यं-शप्यम् 'शप् आक्रोशे' इत्यस्माद्धातोः 'पोरदुपधात्' इति यत्प्रत्यये सोरमि पूर्वरूपे तत्सिद्धिः ।

इत्यः ( १६२९ )—एतुं योग्यः-इत्यः । इण्धातोः एतिस्तुशास्वृदृजुषः क्यप्' इति कर्मणि क्यपि 'ह्रस्वस्य पिति कृति तुक्' इति तुकि कित्वाद्गुणाऽभावे विभक्तिकार्ये 'इत्यः' इति ।

शिष्यः ( १९३३, ४७, ४९ )—शासितुं योग्यः-शिष्यः । शास्धातोः 'एतिस्तुशास्वृदृजुषः क्यप्' इति कर्मणि क्यपि 'शास इदङ्हलोः' इत्युपधाया इत्वे 'शासिवसिघसीनां च' इति सस्य षत्वे विभक्तिकार्ये 'शिष्यः' इति ।

वृत्यः ( १९२६ )—वरितुं योग्यः-वृत्यः । वृधातोः 'एतिस्तुशास्-' इति क्यपि ह्रस्वस्य पिति कृति तुक्' इति तुकि विभक्तिकार्ये तत्सिद्धिः ।

आदृत्यः ( १६३५ )—आदर्तुं योग्यः-आदृत्यः । 'आङ्' उपसर्गकदृधातोः 'एतिस्तुशास्-' इति क्यपि 'ह्रस्वस्य' इति तुकि विभक्तिकार्ये तत्सिद्धिः ।

**कार्यम्** ( १९५० )—कर्तुं योग्यम्–कार्यम्। कृधातोः 'ऋहलोर्ण्यत्' इति ण्यत्प्रत्यये 'अचो ञ्णिति' इति वृद्धौ रपरत्वे विभक्तिकार्ये तत्सिद्धम्।

**मार्ग्यः** ( १९२१, २४, २७ )—मार्जितुं योग्यः–मृज्यः, मार्ग्यः। मृजूधातोः 'मृजेर्विभाषा' इति विकल्पेन क्यपि कित्वाद्गुणाऽभावे विभक्तिकार्ये 'मृज्यः' इतिः। क्यपोऽभावे 'ऋहलोर्ण्यत्' इति ण्यति 'चजोः कु घिण्ण्यतोः' इति जस्य कुत्वे 'मृजेर्वृद्धिः' इति वृद्धौ रपरत्वे विभक्तिकार्ये 'मार्ग्यः' इति च सिद्धं भवति।

इति सोत्तरायां प्रश्नावल्यां कृत्यप्रकरणम्।

---

# अथ पूर्वकृदन्तप्रकरणम्

**कारकः**—करोतीति–कारकः। कृ धातोः 'ण्वुल्तृचौ' इति कर्तरि अर्थे ण्वुलि अनुबन्धलोपे 'युवोरनाकौ' इति 'वु' इत्यस्य अकादेशे 'अचो ञ्णिति' इति वृद्धौ रपरत्वे कृदन्तत्वात् प्रातिपदिकसंज्ञायां सौ सस्य रुत्वे विसर्गे 'कारकः' इति।

**कर्ता**—करोतीति–कर्ता। कृधातोः 'ण्वुल्तृचौ' इति तृचि गुणे रपरत्वे 'कर्तृ' इति, तस्मात् कृदन्तत्वात्प्रातिपदिकसंज्ञायां सौ 'ऋदुशनस–' इत्यनङि 'अप्तृन्–' इति दीर्घे सुलोपे नलोपे 'कर्ता' इति।

**नन्दनः**—नन्दयतीति–नन्दनः। 'टुनदि समृद्धौ' इत्यस्माद्धातोः इदित्वान्नुमि णिचि 'नन्दि' इति, तस्मात् 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इति ल्युप्रत्यये अनुबन्धलोपे 'युवोरनाकौ' इति योरनादेशे णिलोपे विभक्तिकार्ये 'नन्दनः' इति।

**जनार्दनः**—जनमर्दयतीति विग्रहे 'अर्द हिंसायाम्' इति धातोः णिचि 'नन्दिग्रहि–' इति ल्युप्रत्यये 'युवोरनाकौ' इति योरनादेशे णिलोपे 'कर्तृकर्मणोः कृति' इति जनमिति कर्मणि षष्ठीविभक्तौ षष्ठीसमासे सुब्लुकि 'एकदेशविकृतमनन्यवत्' इति प्रातिपदिकत्वात् सौ रुत्वे विसर्गे 'जनार्दनः' इति सिद्धम्।

**लवणः** ( १९५१ ) लुनातीति–लवणः। 'लूञ् छेदने' धातोः 'नन्दिग्रहि–' इति ल्युप्रत्यये 'युवोरनाकौ' इति योरनादेशे गुणे अवादेशे निपातनात् णत्वे विभक्तिकार्ये तत्सिद्धिः।

**प्रज्ञः** ( १९२९ ) प्रकर्षेण जानातीति–प्रज्ञः। प्रोपसर्गकज्ञाधातोः 'आतश्चोपसर्गे' इति कप्रत्यये 'आतो लोप इटि च' इत्यालोपे विभक्तिकार्ये तत्सिद्धिः।

**गृहम्** ( १९२६ ) गृह्णाति धान्यादिकमिति–गृहम्। 'ग्रह् उपादाने' इति धातोः 'गेहे कः' इति कप्रत्यये 'ग्रहिज्ये'ति सम्प्रसारणे पूर्वरूपे कित्वाद्गुणनिषेधे स्वादिकार्ये 'गृहम्' इति।

**कुम्भकारः** ( १९४२ )—कुम्भं करोतीति विग्रहे 'तत्रोपपदं सप्तमीस्थम्' इति कुम्भशब्दस्योपपदसंज्ञायां सत्यां कुम्भोपपदात् कृधातोः 'कर्मण्यण्' इत्यणि 'अचो ञ्णिति' इति वृद्धौ रपरे 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठ्यां 'गति-कारके'ति परिभाषया सुबुत्पत्तेः प्रागेव 'कुम्भ अस् कार' इत्यलौकिकविग्रहे' उपप-दमतिङ्' इति समासे सुब्लुकि एकदेशविकृतस्यानन्यत्वात् प्रातिपदिकत्वेन सौ सस्य रुत्वे विसर्गे 'कुम्भकारः' इति।

**भिक्षाचरः**—भिक्षां चरतीति विग्रहे 'भिक्षासेनादायेषु च' इति टप्रत्यये 'कर्तृ-कर्मणोः कृतिः' इति कर्मणि षष्ठ्याम् 'उपपदमतिङ्' इति समासे विभक्तिकार्यें तत्सिद्धिः।

**यशस्करी** ( १९४६ )—विद्यायाः यशोहेतुत्वात् यशः करोतीति विग्रहे कृ धातोः 'कृञो हेतुताच्छील्यानुलोम्येषु' इति टप्रत्यये गुणे रपरे 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठ्यां 'गतिकारके'ति सुबुत्पत्तेः प्रागेव 'यशस् अस् कर' इति स्थिते 'उपपदमतिङ्' इति समासे सुब्लुकि सस्य रुत्वे विसर्गे 'यशः कर' इति स्थिते 'अतः कृकमि–' इति विसर्गस्य सत्वे स्त्रीत्वविवक्षायां 'टिड्ढाणञ्'–इति टित्वाद् ङीपि भत्वाद्'यस्येति च' इत्यलोपे ङ्यन्तत्वात् सौ हल्ङ्यादिना सुलोपे उक्तं रूपं सिद्धम्।

**जनमेजयः** ( १९४७, ५१ )—जनमेजयतीति विग्रहे ण्यन्तादेज्धातोः 'एजेः खश्' इति खशि अनुबन्धलोपे शित्वात् सार्वधातुकसंज्ञायां शपि गुणे अयादेशे पूर्वरूपे कर्मणि षष्ठ्यां 'जन अस् एजय' इत्यलौकिकविग्रहे सुबुत्पत्तेः प्रागेव उप-पदसमासे सुब्लुकि 'अरुर्द्विषदजन्तस्य मुम्' इति मुमि विभक्तिकार्ये उक्तं रूपं सिद्धम्।

**वशंवदः** ( १९–२१, ५२ )—वशं वदतीति विग्रहे वद्धातोः, 'प्रियवशे वदः खच्' इति खचि 'कर्तृकर्मणोः कृतिः' इति कर्मषष्ठ्यां 'गतिकारे'ति सुबुत्पत्तेः प्रागेव उपपदसमासे सुब्लुकि 'अरुर्द्विषदजन्तस्य मुम्' इति मुमि मस्यानु स्वारे विभक्तिकार्यें उक्तं रूपं सिद्धम्।

**सुशर्मा** ( १९३८ )-सुष्ठु शृणातीति विग्रहे सुपूर्वकात् शृधातोः 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन्प्रत्यये अनुबन्धलोपे गुणे रपरत्वे 'नेड्वशि कृति' इतीड्निषेधे कृदन्तत्वात् सौ दीर्घे सुलोपे नलोपे 'सुशर्मा' इति निष्पन्नम् ।

**विजावा** ( १९२६ ) विजायत इति-विजावा । विपूर्वात् 'जनी प्रादुर्भावे' इति धातोः 'अन्येभ्योऽपि दृश्यन्ते' इति वनिपि 'विड्वनोः-' इत्यात्वे सवर्णदीर्घे 'विजावन्' इति, तस्मात् कृदन्तत्वात् सौ दीर्घे सुलोपे नलोपे 'विजावा' इति ।

**अवावा** ( १९३९ )—ओण्धातोः 'अन्येभ्योऽपि दृश्यन्ते' इति वनिपि 'विड्वनोः—'इत्यात्वे अवादेशे 'अवावन्' इति, तस्मात् सौ दीर्घे सुलोपे नलोपे 'अवावा' इति ।

**उखास्रत्**—उखायाः ( पात्रात् ) स्रंसते इति विग्रहे 'क्विप् च' इति क्विपि 'अनिदिताम्-' इति नलोपे प्रातिपदिकत्वात् सौ पंचमीसमासे सुब्लुकि एकदेश-विकृतस्याऽनन्यत्वात् सौ 'वसुस्रंसु-' इति दत्वे सुलोपे चर्त्वे तत्सिद्धिः ( एवं पर्णाद्ध्वंसते इति पर्णध्वत् ) ।

**ऊष्णभोजी** ( १९५० )—उष्णं भुङ्क्ते तच्छीलः इति विग्रहे उष्णोपपदाद् भुजधातोः 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिप्रत्यये लघूपधगुणे कर्मणि षष्ठ्या-मुपपदसमासे कृदन्तत्वात् सौ 'सौ च' इति दीर्घे सुलोपे नलोपे तत्सिद्धिः ।

**पण्डितम्मन्यः** ( १९२७, ४९ )—पण्डितमात्मानं मन्यते इति विग्रहे मन्धातोः 'आत्ममाने खश्च' इति खशि शित्वात् सार्वधातुकसंज्ञायां शपि प्राप्ते तं प्रबाध्य 'दिवादिभ्य श्यन्' इति श्यनि पररूपे कर्मषष्ठ्यामुपपदसमासे 'अरुर्द्विषद-जन्तस्य मुम्' इति मुमि विभक्तिकार्ये उक्तं रूपं जातम् ।

**कालिम्मन्या** ( १९२४ )—कालीमात्मानं मन्यते इति विग्रहे 'आत्ममाने खश्च' इति खशि श्यनि पररूपे कर्मषष्ठ्यामुपपदसमासे सुब्लुकि 'खित्यनव्ययस्य' इति ह्रस्वे 'अरुर्द्विष-' इति मुमि अजन्तत्वेन स्त्रीत्वाट्टापि विभक्तिकार्ये तत्सिद्धिः ।

**सोमयाजी** ( १९५१ ) सोमेन इष्टवानिति विग्रहे सोमोपपदात् यज्धातोः 'करणे यजः' इति णिनिप्रत्यये उपधावृद्धौ उपपदसमासे सुब्लुकिकृदन्तत्वात् सौ दीर्घे सुलोपे नलोपे उक्तं रूपं सिद्धम् ।

**सरसिजम्** ( १९२३, ३६)—सरसि जातमिति विग्रहे सप्तम्यन्तसरश्शब्दो-

पयदाज्जनधातोः 'सप्तम्यां जनेर्डः' इति डप्रत्यये डित्वाट्टिलोपे उपपदसमासत्वात् सप्तम्याः लुकि प्राप्ते 'तत्पुरुषे कृति बहुलम्' इति तन्निषेधे कृदन्तत्वात् सौ सोरमि पूर्वरूपे 'सरसिजम्' इति। लुकि तु रुत्वे उत्वे गुणे 'सरोजम्' इति भवति।

शीर्णः—शॄधातोः कर्मणि 'निष्ठा' इति क्तप्रत्यये 'ॠत इद्धातोः' इति इत्वे रपरत्वे 'हलि च' इति दीर्घे 'रदाभ्याम्' इति नत्वे णत्वे विभक्तिकार्ये तत्सिद्धिः।

भिन्नः (१९३२, ४८, ५०, ५२)—अभेदि इति भिन्नः। भिद्धातोः कर्मणि 'निष्ठा' इति क्तप्रत्यये कित्वाद्गुणाभावे 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' इति निष्ठातकारस्य भिदो दकारस्य च नत्वे विभक्तिकार्ये तत्सिद्धिः।

लूनः—(१९३०) अलावीति-लूनः। लूधातोः कर्मणि क्तप्रत्यये 'ल्वादिभ्यः' इति निष्ठातकारस्य नकारे विभक्तिकार्ये 'लूनः' इति।

भुग्नः (१९३१, ३४, ३५)—'भुजो कौटिल्ये' इति धातोः भावे 'निष्ठा' इति क्तप्रत्यये नत्वस्याऽसिद्धत्वात् पूर्वं 'चोः कुः' इति जस्य कुत्वे ततः 'ओदितश्च' इति निष्ठातस्य नत्वे विभक्तिकार्ये तत्सिद्धिः।

उच्छूनः (१९२९, ४५) उदश्वत् इति उच्छूनः। उत्पूर्वकात् 'टुओश्वि गतिवृद्धयोः' इति धातोः 'निष्ठा' इति क्तप्रत्यये 'वचिस्वपियजादीनां किति' इति सम्प्रसारणे पूर्वरूपे 'श्वीदितो निष्ठायाम्' इतीण्निषेधे 'हलः' इति दीर्घे 'ओदितश्च' इति निष्ठातकारस्य नत्वे श्चुत्वे छत्वे विभक्तिकार्ये तत्सिद्धिः।

शुष्कः (१९४७, ५१)—अशुषत् इति शुष्कः। 'शुष् शोषणे' धातोः कर्तरि क्ते 'शुषः कः' इति निष्ठातस्य कत्वे विभक्तिकार्ये तत्सिद्धिः।

क्षामः (१९३३)—अक्षासीत् इति क्षामः। क्षैधातोः 'आदेच उपदेशेऽशिति' इत्यात्वे 'क्षायो मः' इति निष्ठातस्य मत्वे विभक्तिकार्ये तत्सिद्धिः।

भावितः (१९२६, ३४)—चन्द्रशेखरः गोपालम् अबीभवत्, चन्द्रशेखरेण गोपालः अभावि-इत्यर्थे 'भावितः' इति। भावयतेः 'निष्ठा' इति कर्मणि क्तप्रत्यये इटि 'निष्ठायां सेटि' इति णेर्लोपे विभक्तिकार्ये 'भावितः' इति।

हितम् (१९२५, ३८)—अधायि-इति 'हितम्'। धाधातोः क्तप्रत्यये 'दधातेर्हिः' इति ह्यादेशे विभक्तिकार्ये 'हितम्' इति।

चक्राणः (१९२६)—चक्रे इति 'चक्राणः'। कृधातोर्लिटि 'लिटः कानज्वा'

इति लिटः कानचि द्वित्वे अभ्यासत्वे 'उरत्' इत्यत्वे रपरत्वे हलादिशेषे यणि चुत्वे 'रषाभ्याम्–' इति णत्वे विभक्तिकार्ये 'चक्राणः' इति ।

जगन्वान्—जगाम इति 'जगन्वान्' । गमधातोर्लिटि 'क्वसुश्च' इति लिटः स्थाने क्वसुप्रत्यये द्वित्वादिकार्ये 'जगम् वस्' इति स्थिते 'म्वोश्च' इति मस्य नत्वे कृदन्तत्वात् सौ उगित्वान्नुमि 'सान्तमहतः संयोगस्य' इति दीर्घे सुलोपे संयोगान्तलोपे 'जगन्वान्' इति ।

पचन्तं (पचमानं वा) चैत्रं पश्य–पच्धातोर्लटि 'लटः शतृशानचावप्रथमासमानाधिकरणे' इति लटो लः स्थाने शतृप्रत्यये शित्वात् सार्वधातुकसंज्ञायां शपि पररूपे कृदन्तत्वात्प्रातिपदिकसंज्ञायां द्वितीयैकवचने अमि उगित्वान्नुमि नस्यानुस्वारे परसवर्णे 'पचन्तम्' इति । शानचि पक्षे तु 'आने मुक्' इति मुकि 'पचमानम्' इति भवति ।

लटः शतृशानचौ—'अप्रथमान्तेन समानाधिकरणे लट एतौ वा स्तः' इत्यर्थः । ( परस्मैपदे शतृप्रत्ययः, आत्मनेपदे शानच्प्रत्ययः इत्येव द्योतयितुमत्र वृत्तौ 'वा' इत्युक्तं नतु विभाषार्थं वेत्यवसेयम् ।

सन् द्विजः ( १९४६ )—'वर्तमाने लट्' इत्यतो लडित्यनुवर्तमाने 'लटः शतृशानचा' विति सूत्रे पुनर्लड्ग्रहणात् प्रथमासमानाधिकरणेऽपि क्वचित् शतृशानचोर्विधानात् 'अस्' धातोर्लटः शतृप्रत्यये शपो लुकि 'श्नसोरल्लोपः' इत्यल्लोपे प्रातिपदिकत्वात् सौ नुमि सुलोपे संयोगान्तलोपे 'सन्' इति ।

विद्वान्, विदन् ( १९२८, ५१ ) —वेत्तीति विग्रहे विद्धातोः शतरि तत्स्थाने 'विदेः शतुर्वसुः' इति विभाषया वसुरादेशे 'विद्वस्' इति, तस्मात् कृदन्तात् सौ उगित्वान्नुमि 'सान्तमहतः' इत्युपधादीर्घे हल्ङ्यादिना सुलोपे संयोगान्तलोपे च कृते 'विद्वान्' इति । वस्वादेशाभावे लटः शतरि शपि शपो लुकि 'विदत्' इति, तस्मात् सौ नुमि सुलोपे 'संयोगान्तस्य लोपः' इति तलोपे 'विदन्' इति च सिद्धं भवति ।

कर्ता कटान्—कटान् करोति तच्छील इति विग्रहे कृधातोः 'तृन्' इति तृन्प्रत्यये 'आर्धधातुकं शेषः' इत्यार्धधातुकत्वात् गुणे रपरत्वे 'कर्तृ' इति, तस्मात् कृदन्तत्वात् सौ 'ऋदुशनस्–' इत्यनङि उपधादीर्घे हल्ङ्यादिना सुलोपे नलोपे उक्तं रूपं सिद्धम् । अत्र 'नलोके'ति कर्मणि षष्ठीनिषेधः ।

**जल्पाकः** ( १९४८ )—जल्पतीति विग्रहे जल्पधातोः 'जल्पभिक्षकुट्टलुण्टवृङः षाकन्' इति षाकनि 'षः प्रत्ययस्य' इति प्रत्ययस्यादिषकारस्येत्संज्ञायां लोपे च कृते कृदन्तत्वात् सौ रुत्वे विसर्गे तत्सिद्धिः ।

**चिकीर्षुः**—सन्नन्तात् चिकीर्षधातोः 'सनाशंसभिक्षउः' इति उप्रत्यये तस्यार्धधातुकत्वात् अतो लोपे विभक्तिकार्ये तत्सिद्धिः ।

**प्राट्**—पृच्छतीति 'प्राट्'। प्रच्छ्धातोः 'क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणं च' इति क्विपि दीर्घे सम्प्रसारणाऽभावे च विहिते क्विपो लुकि 'च्छ्वोः शूडनुनासिके च' इति छस्य शादेशे कृदन्तत्वात् सौ हल्ङ्यादिना सुलोपे 'व्रश्चभ्रस्ज–' इति षत्वे षस्य जश्त्वे चर्त्वे 'प्राट्' इति ।

**आयतस्तूः**—आयतं स्तौतीति विग्रहे 'क्विब्वचिप्रच्छ्यायतस्तु–' इति क्विपि दीर्घे विभक्तिकार्ये कर्मषष्ठ्या समासः ।

**लवित्रम्** ( १९४९ )—लुनात्यनेनेति विग्रहे 'लूञ् छेदने' इति धातोः 'अर्तिलूधूसूखनसहचर इत्रः' इति करणेऽर्थे इत्रप्रत्यये गुणेऽवादेशे स्वादिकार्ये तत्सिद्धिः ।

**खनित्रम्** ( १९२६ ) खनत्यनेनेति विग्रहे 'अर्तिलूधू–' इति करणेऽर्थे इत्रप्रत्यये विभक्तिकार्ये तत्सिद्धिः । एवं चरत्यनेनेति **'चरित्रम्'** ( १९२५ ) ।

इति सोत्तरायां प्रश्नावल्यां पूर्वकृदन्तप्रकरणम् ।

---

# अथ उणादिप्रकरणम् ।

**कृवापाजि**—डुकृञ् करणे, वा गतिगन्धनयोः, पा पाने, जि अभिभवे, डुमिञ् प्रक्षेपणे, स्वद् आस्वादने, साध् संसिद्धौ, अशू व्याप्तौ, इत्येतेभ्यः धातुभ्यः उण्प्रत्ययः स्यात् कर्त्रर्थे । सूत्रमिदं शाकटायनप्रणीतं नतु पाणिना प्रोक्तमिति ध्येयम् ।

**वायुः**—वाधातोः 'कृवापाजी' त्युणि 'आतो युक् चिण्कृतोः' इति युकि कृदन्तत्वात् सौ सस्य रुत्वे विसर्गे 'वायुः' इति ।

**संज्ञासु**—'उणादयो बहुलम्' इत्युक्त्वा 'केचिदविहिताप्यूह्याः' इत्युक्तं मूले, तदेव प्रतिपादयति-संज्ञास्विति । संज्ञासु=संज्ञाशब्देषु ( डित्थ–डवित्थादिषु ) धातुरूपाणि ऊह्यानि, ततः परं प्रत्ययाश्च ऊहनीयाः = कल्पनीयाः, प्रत्ययेष्वपि गुणवृद्ध्यभा-

वादिकार्यं दृष्ट्वा अनूबन्धम् = ञित्-णित्-कित्ङिदित्याद्यनुबन्धं विद्यात्=कल्पयेत्, एतत् = एतावदेव, उणादिषु, शास्त्रम् = अनुशासनमस्तीत्यर्थः । उदाहरणं यथा-'ऋफिड्डः' इति। अत्र ऋधातुः प्रकृतिः, तस्मात् फिड्डः प्रत्ययः, ततो गुणाऽभावद-र्शनात् प्रत्ययस्य कित्वमूह्यते ।

इति सोत्तरायां प्रश्नावल्यामुणादिप्रकरणम् ।

---

# अथोत्तरकृदन्तप्रकरणम्

**द्रष्टुम्, दर्शकः** ( १९२०, ४४ )—दृश्धातोः 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति तुमुनि अनुबन्धलोपे 'सृजिदृशोर्झल्यमकिति' इति अमि 'द् अ श् तुम्' इति स्थिते यणि 'व्रश्चभ्रस्ज-' इति षत्वे ष्टुत्वे मान्तत्वात् 'कृन्मेजन्तः' इत्यव्ययत्वात् सुब्लुकि 'द्रष्टुम्' इति । दृशो ण्वुलि वोरकि 'पुगन्ते'ति गुणे रपरत्वे विभक्तिकार्ये 'दर्शकः' इति ।

**भोक्तुम्** ( १९३१ )—भुज्धातोः 'कालसमयवेलासु तुमुन्' इति तुमुनि अनुबन्धलोपे 'पुगन्तलघूपधस्य च' इति गुणे 'चोः कुः' इति जस्य कुत्वेन गकारे 'खरि चे'ति चर्त्वेन ककारे 'कृन्मेजन्तः' इति मान्तत्वादव्ययसंज्ञायां सुब्लुकि 'भोक्तुम्' इति ।

**पाकः** ( १९२५ )—पच्धातोः 'भावे' इति घञि अनुबन्धलोपे उपधावृद्धौ 'चजोः कु घिण्ण्यतोः' इति चस्य कुत्वे विभक्तिकार्ये 'पाकः' इति ।

**रागः** ( १९२१, ४१ ) रञ्ज्धातोः 'अकर्तरि च कारके संज्ञायाम्' इति घञि अनुबन्धलोपे 'घञि च भावकरणयोः' इति रञ्जेर्नलोपे 'च जोः कु घिण्ण्यतोः' इति जस्य कुत्वे उपधावृद्धौ विभक्तिकार्ये 'रागः' इति ।

**निकायः**—निपूर्वकात् चिधातोः 'निवासचितिशरीरोपसमाधानेष्वादेश्च कः' इति घञि चस्य कत्वे अनुबन्धलोपे वृद्धौ आयादेशे विभक्तिकार्ये 'निकायः' इति ।

**चयः** ( १९४८, ५० )—चिधातोः 'एरच्' इत्यचि अनुबन्धलोपे गुणे अयादेशे विभक्तिकार्ये 'चयः' इति ।

**लवः** ( १९४९ ) लूधातोः 'ऋदोरप्' इत्यपि अनुबन्धलोपे गुणे अवादेशे विभक्तिकार्ये 'लवः' इति ।

**पवः** ( १९४९ ) 'पूञ् पवने' इति धातोः 'ऋदोरप्' इत्यपि अनुबन्धलोपे गुणेऽवादेशे विभक्तिकार्ये 'पवः' इति ।

**उप्त्रिमम्** ( १९३६ )—वापेन निर्वृत्तम् 'उप्त्रिमम्'। डुवप् बीजसन्ताने' इत्यस्माद्धातोः 'ड्वितः क्त्रिः' इति क्त्रौ 'क्त्रेर्मम्नित्यम्' इति निर्वृत्तेर्थे मपि अनुबन्धलोपे 'वचिस्वपि'–' इति सम्प्रसारणे पूर्वरूपे विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**वेपथुः** ( १९५१ )—'टुवेपृ कम्पने' इति धातोः 'ट्वितोऽथुच्' इत्यथुचि अनुबन्धलोपे विभक्तिकार्ये तत्सिद्धिः ।

**यज्ञः** ( १९२३ )—यज्धातोः 'यजयाचयतविच्छप्रच्छरक्षो नङ्' इति नङि अनुबन्धलोपे नस्य श्चुत्वेन ञकारे विभक्तिकार्ये 'यज्ञः' इति ।

**याच्ञा** ( १९२७ )—याच्धातोः 'यजयाच–' इति नङि अनुबन्धलोपे नस्य श्चुत्वेन ञकारे स्त्रीत्वाट्टापि विभक्तिकार्ये 'याच्ञा' इति ।

**कीर्णिः**—कॄधातोः 'स्त्रियां क्तिन्' इति क्तिनि अनुबन्धलोपे 'ॠत इद्धातोः' इतीत्वे रपरत्वे 'हलि चे'ति दीर्घे 'ऋल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः' इति निष्ठावद्भावात् तस्य नत्वे णत्वे विभक्तिकार्ये 'कीर्णिः' इति ।

**ऊतियूति**—एते स्त्रियां क्तिन्नन्ताः निपात्यन्ते, इत्यर्थः। तथाहि–'अव रक्षणे' इति धातोः क्तिनि तस्य निपातनादुदात्तत्वे 'ज्वरत्वर–' इत्यकारवकारयोरूठि 'ऊतिः' इति युधातोर्जुधातोर्वा क्तिनि निपातनाद्दीर्घे यूतिः, जूतिरिति च । 'षोऽन्तकर्मणि' इत्यस्मात् क्तिनि 'धात्वादेः' इति सत्वे 'आदेच उपदेशेऽशिति' इत्यात्वे 'द्यतिस्यति'–इतीत्वे प्राप्ते निपातनात्तदभावे सातिरिति । अथवा सन् धातोः क्तिनि 'जनसन–' इत्यात्वम् । अत्र क्तिन उदात्तत्वं निपात्यते । हनः क्तिनि नकारस्य निपातनादित्वे 'आद्गुणः' इति गुणे हेतिरिति । अथवा हिधातोः क्तिनि निपातनाद्गुणः । ण्यन्तकॄतधातोः 'ण्यासश्रन्थो युच्' इति युचं प्रबाध्य निपातनात्क्तिनि इत्वे रपरत्वे दीर्घे 'झरो झरि' इति तलोपे कीर्तिरिति ।

**चिकीर्षा**—( १९४२, ४६ ) कृधातोः सनि द्वित्वादिके 'चिकीर्ष' इत्यस्य धातुत्वेन तस्मात् 'अ प्रत्ययात्' इत्यप्रत्यये 'अतो लोपः' इति सनोऽकारलोपे कृदन्तत्वात्प्रातिपदिकत्वेन स्त्रीत्वे टापि सवर्णदीर्घे हल्ङ्यादिना सुलोपे उक्तं रूपं सिद्धम् ।

**हारणा** ( १९२६, ३४ )—हृधातोर्णिचि 'हारि' इत्यस्मात् 'ण्यासश्रन्थो युच्' इति युचि योरनादेशे णिलोपे णत्वे टापि विभक्तिकार्ये तत्सिद्धिः।

**अपामार्गः** ( १९३१, ५२ )—अपपूर्वान्मृज्धातोः 'हलश्च' इति घञि 'मृजेर्वृद्धिः' इति वृद्धौ 'चजोः कु–' इति कुत्वे 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घे विभक्तिकार्ये उक्तं रूपं सिद्धम्।

**दुष्करः** ( १९४५ )—दुस्पूर्वात् कृञ्धातोः 'ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इति खलि अनुबन्धलोपे गुणे रपरे 'इदुदुपधस्य चाप्रत्ययस्य' इति सस्य षत्वे कृदन्तत्वात् सौ सस्य रुत्वे विसर्गे उक्तं रूपं सिद्धम्।

**सुपानः** ( १९३३ )—सुष्ठु पीयते इति सुपानः। सुपूर्वकात् पाधातोः 'ईषद्दुस्सुषु–' इति प्राप्तं खलं प्रबाध्य 'आतो युच्' इति युचि अनुबन्धलोपे 'युवोरनाकौ' इति योरनादेशे सवर्णदीर्घे विभक्तिकार्ये 'सुपानः' इति।

**शयित्वा** ( १९३३ )—शीङ्धातोः 'समानकर्तृकयोः पूर्वकाले' इति क्त्वाप्रत्यये इटि अनुबन्धलोपे 'न क्त्वा सेट्' इति कित्वनिषेधाद् गुणेऽयादेशे कृदन्तत्वात् प्रातिपदिकसंज्ञायां सौ 'क्त्वातोसुन्कसुनः' इत्यव्ययत्वात् सुब्लुकि तत्सिद्धिः।

**द्युतित्वा** ( १९२८, ३८ )—द्युत्धातोः क्त्वाप्रत्यये इटि अनुबन्धलोपे 'न क्त्वा सेट्' इति कित्वनिषेधं प्रबाध्य 'रलो व्युपधाद्धलादेः संश्च' इति पाक्षिककित्वाद्गुणनिषेधे कृदन्तत्वात् सौ 'क्त्वातोसुन्–' इत्यव्ययत्वात् सुब्लुकि तत्सिद्धिः।

**लिखित्वा** ( १९४७ )—लिख्धातोः क्त्वाप्रत्यये इटि अनुबन्धलोपे 'न क्त्वा सेट्' इति प्राप्तकित्वनिषेधं प्रबाध्य 'रलोव्युपधात्–' इति पाक्षिककित्वाद् गुणनिषेधे 'लिखित्वा' इति।

पक्षे गुणे 'लेखित्वा' इति च भवति।

**शमित्वा** ( १९२७ )—शम्धातोः क्त्वाप्रत्यये अनुबन्धलोपे 'उदितो वा' इति विभाषया इटि अनुबन्धलोपे प्रातिपदिकत्वात् सौ 'क्त्वातोसुन्–' इत्यव्ययत्वात् सुब्लुकि 'शमित्वा' इति।

इडभावपक्षे 'अनुनासिकस्य क्विझलोः क्ङिति' इत्यात्वे अनुस्वारे परसवर्णे 'शान्त्वा' इति च सिद्धं भवति।

**देवित्वा** ( १९ २९, ४६ )—दिव्धातोः क्त्वाप्रत्यये 'उदितो वा' इति पाक्षिके

इटि अनुबन्धलोपे लघूपधगुणे प्रातिपदिकत्वात् सौ 'क्त्वातोसुन्–' इत्यव्ययत्वात् सुब्लुकि 'देवित्वा' इति ।

इडभावे 'च्छ्वोः शूडनुनासिके च' इत्यूठि अनुबन्धलोपे यणि 'द्यूत्वा' इति च सिद्धं भवति ।

हित्वा ( १९ ३१, ३५, ४९ )—धाधातोः 'समानकर्तृकयोः–' इति क्त्वाप्रत्यये अनुबन्धलोपे 'दधातेर्हिः' इति धास्थाने 'हि' इत्यादेशे प्रातिपदिकत्वात् सौ अव्ययत्वात् सुब्लुकि 'हित्वा' इति । 'ओहाक् त्यागे' इत्यस्य क्त्वायां तु 'जहातेश्च' इत्यनेन हित्वं बोध्यम् । 'ओहाङ् गतौ' इति धातोः क्त्वायां तु 'हात्वा' इति भवति । अत्र 'जहातेश्च' इति हित्वं तु न, सूत्रे जहातेरिति निर्देशात् । अन्यथा तत्र 'भृञामित्' इतीत्वे 'जिहातेश्चे'ति सूत्रस्वरूपापत्तेः ।

प्रकृत्य ( १९ २३, ३२ )—प्रपूर्वात् कृधातोः 'समानकर्तृकयोः–' इति क्त्वाप्रत्यये 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति ल्यपि अनुबन्धलोपे 'ह्रस्वस्य पिति कृति तुक्' इति तुकि अनुबन्धलोपे प्रातिपदिकत्वात् सौ 'क्त्वातोसुन्–' इत्यव्ययत्वात् सुब्लुकि तत्सिद्धिः ।

स्मारं स्मारम् ( १९४३ )—स्मृधातोः 'आभीक्ष्ण्ये णमुल् च' इति णमुलि अनुबन्धलोपे 'अचो ञ्णिति' इति वृद्धौ रपरत्वे 'नित्यवीप्सयोः' इति द्वित्वे कृदन्तत्वात् सौ 'कृन्मेजन्तः' इति मान्तत्वादव्ययसंज्ञायां सुब्लुकि प्रथममकारस्यानुस्वारे 'स्मारं स्मारम्' इति । स्मृत्वा स्मृत्वा इत्यर्थः ।

पायं पायम् ( १९५० )—पाधातोः 'आभीक्ष्ण्ये णमुल् च' इति णमुलि अनुबन्धलोपे 'आतो युक् चिण्कृतोः' इति युकि 'नित्यवीप्सयोः' इति द्वित्वे मान्तत्वादव्ययत्वेन सुब्लुकि प्रथममकारस्यानुस्वारे तत्सिद्धिः । ( पीत्वा पीत्वा इत्यर्थः ।

भोजं भोजम् ( १९४८ ) भुज्धातोः 'आभीक्ष्ण्ये णमुल् च' इति णमुलि गुणे 'नित्यवीप्सयोः' इति द्वित्वे प्रातिपदिकत्वात् सौ अव्ययत्वात् सुब्लुकि पूर्वमकारस्यानुस्वारे तत्सिद्धिः । भुक्त्वा भुक्त्वा इत्यर्थः ।

अन्यथाकारम् ( १९३७, ४५ )—अन्यथेत्यस्य प्रयोगे कृधातोः 'अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्' इति णमुलि अनुबन्धलोपे 'अचो ञ्णिति' इति वृद्धौ रपरत्वे प्रातिपदिकत्वात् सौ मान्तत्वेन अव्ययत्वात् सुब्लुकि 'अन्यथाकारम्' इति । अन्यथा भुंक्ते इत्यर्थः ।

इत्थङ्कारं भुङ्क्ते ( १९५१ )—इत्थमित्यस्य प्रयोगे 'अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्' इति कृधातोर्णमुलि वृद्धौ रपरत्वे कृदन्तत्वात् सौ मान्तत्वात् अव्ययत्वे सुब्लुकि इत्थमित्येतद्घटकस्य मस्यानुस्वारे परसवर्णे 'इत्थङ्कारम्' इति।

इति सोत्तरायां प्रश्नावल्यामुत्तरकृदन्तप्रकरणम्।

# अथ कारकप्रकरणम्

**प्रातिपदिकार्थेति**—पदम्पदमिति प्रतिपदम्, प्रतिपदे भवं प्रातिपदिकम्, तस्यार्थः प्रातिपदिकार्थः। स च लिङ्गं च परिमाणं च वचनं चेति प्रातिपदिकार्थ-लिङ्गपरिमाणवचनानि। तान्येव प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रं तस्मिन्। 'द्वन्द्वादौ द्वन्द्वमध्ये द्वन्द्वान्ते च श्रूयमाणं पदं प्रत्येकमभिसम्बद्ध्यते' इति भाष्योक्त्या द्वन्द्वान्ते श्रूयमाणमात्रपदस्य प्रत्येकमन्वयात् प्रातिपदिकार्थमात्र इत्याद्यर्थः सम्पद्यते। **नियतोपस्थितिकः इति**—नियता=व्यापिका, उपस्थितिर्यस्य स 'नियतोपस्थितिकः।' यस्मिन्प्रातिपदिके उच्चारिते सति यस्यार्थस्य नियमेनोपस्थितिः स नियतोपस्थितिकः।

**कर्तुरीप्सिततमं कर्म** ( १९ २०, ४१ ) कारके इत्यनुवर्तते तच्च प्रथमया विपरिणम्यते। कर्तुरिति 'क्तस्य च वर्तमाने' इति कर्तरि षष्ठी। आप्तुमिष्यमाणमीप्सितम्, अतिशयेनेप्सितमीप्सिततमम्। धातूपात्तव्यापाराश्रयः कर्ता। केनाप्तुमित्याकाङ्क्षायां कर्तृविशेषणीभूतव्यापारेणेत्यर्थाल्लभ्यते। ततश्च—कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यादित्यर्थः सम्पद्यते। हरिं भजतीत्युदाहरणम्।

**हरिं भजति** ( १९३२ )—अत्र भजनक्रियया सम्बन्धुं देवदत्तादिकर्तुरत्यन्तेच्छाविषयीभूतस्य हरेः 'कर्तुरीप्सिततमं कर्म' इत्यनेन कर्मत्वात् 'कर्मणि द्वितीया' इत्यनेन द्वितीया भवति।

**हरिः सेव्यते** इत्यत्र तु 'षेवृ सेवने' इत्यस्मात् कर्मणि तङो विधानात् तङा कर्मणो हरेरुक्तत्वात् प्रथमैव भवति न तु द्वितीया।

**गां दोग्धि पयः** ( १९२२, ४३ )—'गोः दोग्धि पयः' इति विग्रहे 'गोः' अपादानत्वाऽविवक्षया कर्मत्वविवक्षायाम् 'अकथितं च' इति कर्मसंज्ञायां 'कर्मणि द्वितीया' इति द्वितीयायां कृतायां 'गां दोग्धि पयः' इति भवति।

**बलिं याचते वसुधाम्** ( १९४४ )—अत्र बलेरपादानत्वाऽविवक्षया कर्मत्व-

विवक्षायाम् 'अकथितं च' इति कर्मसंज्ञायां 'कर्मणि द्वितीया' इति द्वितीया भवति ।

**बलिं भिक्षते वसुधाम्** ( १९४५, ५१ )—'अकथितं चे'ति सूत्रे "अर्थनिबन्धनेयं संज्ञा" इति कैयटादिभिर्व्याख्यातत्वेन याचनार्थक 'भिक्ष्' धातुयोगेऽप्यत्र बलेरपादानत्वाऽविवक्षया कर्मत्वविवक्षायां कर्मत्वाद् द्वितीया भवति ।

**रामेण बाणेन हतो वाली**—रामकर्तृकबाणकरणकहननाश्रयो बालीति शाब्दबोधः । अत्र रामो बाणेन बालिनं जघान इति विग्रहे हन् धातोः कर्मणि क्तप्रत्यये कर्मण उक्तत्वात् तत्र प्रथमा । हननक्रियायां रामस्य स्वातन्त्र्यविवक्षया 'स्वतन्त्रः कर्ते'ति कर्त्तृसंज्ञा । बाणस्य च हननक्रियायामत्यन्तोपकारकत्वात् 'साधकतमं करणम्' इत्यनेन करणसंज्ञा । ततश्चोभयत्र कर्तृकरणयोरनुक्तत्वात् 'कर्तृकरणयोस्तृतीया' इत्यनेन तृतीयायां सत्यामुक्तं रूपं सिद्धम् ।

**कर्मणेति** ( १९२०, २८, ४४ )—दानक्रियाकर्मणा कर्त्ता यमभिप्रैति सम्बध्नाति सम्बन्धुमीप्सति वा तत्कारकं सम्प्रदानसंज्ञकमित्यर्थः । सम्यक्प्रदीयतेऽस्मै तत्सम्प्रदानम् । 'स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्त्यनुकूलव्यापारः दाधात्वर्थः । अत एव 'रजकस्य वस्त्रं ददाति' इत्यत्र 'रजकाय वस्त्रं ददाति' इति न भवति ।

**विप्राय गां ददाति** ( १९३९, ४८ )—अत्र गोपालादिः कर्ता दानस्य कर्मणा गवा विप्रं सम्बन्धुमिच्छतीति 'कर्मणा यमभिप्रैति–' सूत्रेण विप्रस्य सम्प्रदानसंज्ञायां 'चतुर्थी सम्प्रदाने' इति चतुर्थी भवति ।

**हरये नमः** ( १९५१ )—अत्र 'नमः-स्वस्ति-स्वाहा–स्वधा–ऽलं–वषड्योगाच्च' इत्यनेन नमः शब्दयोगे चतुर्थी भवति ।

**प्रजाभ्यः स्वस्ति** ( १९५२ )—अत्र 'नमःस्वस्ति–' इति स्वस्तियोगे चतुर्थी भवति । प्रजासम्बन्धिकुशलमित्यर्थः ।

**अग्नये स्वाहा** ( १९५० )—'नमःस्वस्तिस्वाहा–' इति सूत्रेण स्वाहायोगे चतुर्थी भवति ।

**ग्रामादायाति** ( १९२४ ) गोपाल इति शेषः । अत्र गोपालविभागावधिर्ग्रामः इति 'ध्रुवमपायेऽपादानम्' इत्यनेन तस्य अपादानसंज्ञायाम् 'अपादाने पञ्चमी' इति पंचमी भवति ।

( प्रकृतधात्वर्थानाश्रयत्वे सति तज्जन्यविभागाश्रयत्वं ध्रुवत्वम् । अपादानत्वन्तु-'विभागजनकव्यापारानाश्रयत्वे सति विभागाश्रयत्वम्' इति ) ।

**मातुः स्मरति** ( १९२२, ४०, ४६ )—'मातरं स्मरति' इत्यर्थे कर्मत्वाऽविवक्षायां शेषत्वविवक्षया 'शेषे षष्ठी' इति षष्ठी भवति ।

( कर्मणि द्वितीया' इत्यादिसूत्रेषु द्वितीयादिविधिषु हि कर्मकर्तृकरणसम्प्रदानाऽपादानाधिकरणकारकाण्यनुक्रान्तानि, प्रथमाविधौ प्रातिपदिकार्थोऽनुक्रान्तः, एतेभ्योऽन्यः स्वस्वामिभावादिसम्बन्धः 'शेषः', तत्र षष्ठी स्यादिति 'शेषे षष्ठी'ति सूत्रस्यार्थः ।

**एधोदकस्योपस्कुरुते**—एधः = काष्ठं, दकस्य = उदकस्य, उपस्कुरुते = गुणमाधत्ते, इत्यर्थः ।

**कटे आस्ते** ( १९४७, ४९ )—अत्र कर्ता गोपालादिस्तन्निष्ठाऽस्तिक्रियायाः परम्परयाऽऽधारस्य कटस्य 'आधारोऽधिकरणम्' इत्यनेन अधिकरणसंज्ञायां 'सप्तम्यधिकरणे' इत्यनेन सप्तमी भवति ।

'आधारोऽधिकरणमि'ति सूत्रे 'औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा । उपसमीपे, श्लेषः = सम्बन्धः, 'उपश्लेषः' तत्कृतमौपश्लेषिकम् । अस्योदाहरणं 'कटे आस्ते' इति । विषये भवो 'वैषयिकः' अस्योदाहरणं 'मोक्षे इच्छास्ति' इति । अत्र कर्तृभूतेच्छागतां सत्तां क्रियां प्रति मोक्षस्य विषयतासम्बन्धपुरस्कारेण इच्छाद्वाराऽऽधारत्वादधिकरणम् । अभि = सर्वतो भावेन, व्याप्नोतीति 'अभिव्यापकः, यः आधारः सर्वमभिव्याप्नोति सः अभिव्यापक इत्युच्यते । अस्योदाहरणं 'सर्वस्मिन्नात्मास्ति ( १९४४ ) सर्वस्मिन्नभिव्याप्य आत्मा वर्तत इत्यर्थः । अत्र आत्मरूपकर्तृगतां सत्तां क्रियां प्रति कृत्स्नव्याप्तिं पुरस्कृत्य आत्मद्वारा सत्ताधारत्वात् सर्वस्याधिकरणत्वम् ।

इति सोत्तरायां प्रश्नावल्यां कारकप्रकरणम् ।

---

# अथ समासप्रकरणम्

## तत्रादौ केवलसमासः

**समासः कतिविधः** ( १९३९ )—समासः पञ्चधा । तत्र (१) विशेषसंज्ञाविनिर्मुक्तः 'केवलसमासः' । अस्योदाहरणं 'भूतपूर्वः' इति । (२) प्रायेण पूर्वपदार्थप्रधानः 'अव्ययीभावः' । अस्योदाहरणम् 'अधिहरि' इति । (३) प्रायेण उत्तरपदा-

र्थप्रधानः 'तत्पुरुषः' । अस्योदाहरणं 'राजपुरुषः' इति । ( तत्पुरुषभेदः कर्मधारयः, यथा 'नीलोत्पलम्' । कर्मधारयभेदो द्विगुः, यथा 'पञ्चगवम्' ) । (४) प्रायेण अन्यपदार्थप्रधानो 'बहुव्रीहिः' । अस्योदाहरणं 'पीताम्बरः' इति । (५) प्रायेण उभयपदार्थप्रधानो 'द्वन्द्वः' । अस्योदाहरणं 'रामकृष्णौ' इति ।

( १ ) **विशेषेति**—विशेषाश्च ताः संज्ञा विशेषसंज्ञा, अव्ययीभावादयस्ताभिर्विनिर्मुक्तः विशेषसंज्ञाविनिर्मुक्तः । अव्ययीभावादिविशेषसंज्ञारहितः केवलसमास इत्यर्थः । ( २ ) **प्रायेण पूर्वपदार्थेति**—पूर्वश्चाऽसौ पदार्थश्च पूर्वपदार्थः, स प्रधानो यस्मिन् स पूर्वपदार्थप्रधानः । यस्मिन् समासे पूर्वपदार्थस्य प्राधान्यं सोऽव्ययीभावसंज्ञक इत्यर्थः । सूपप्रति=उन्मत्तगङ्गमित्याद्यव्ययीभावेऽपि सूपोन्मत्तयोः पूर्वपदार्थयोरप्राधान्यात्प्रसक्तव्यभिचारनिवृत्त्यर्थमुक्तलक्षणे प्रायेणेति पदम् । ( ३ ) **प्रायेणोत्तरेति**—उत्तरपदार्थः प्रधानो यस्मिन् स उत्तरपदार्थप्रधानः । यस्मिन् समासे उत्तरपदार्थस्य प्राधान्यं स तत्पुरुषसंज्ञक इत्यर्थः । अतिमालादौ अतिक्रमणकर्तृत्वरूपपूर्वपदार्थस्यैव प्राधान्येन मालादिरूपोत्तरपदार्थस्याऽप्राधान्यादुक्तलक्षणे प्राप्तव्यभिचारनिवृत्तये प्रायेणेति । ( ४ ) **प्रायेणान्यपदार्थेति**—अन्यपदार्थो प्रधानं यस्मिन् सोऽन्यपदार्थप्रधानः । यस्मिन् समासेऽन्यपदार्थस्य वर्तिपदार्थातिरिक्तस्य प्राधान्यं स बहुव्रीहिसंज्ञक इत्यर्थः । बहुव्रीहावपि 'द्वित्रा' इत्यादावन्यपदार्थस्याऽप्राधान्यात् प्रायेणेत्युक्तम् । ( ५ ) **प्रायेणोभयपदार्थेति**—उभयः पदार्थः प्रधानो यस्मिन् स उभयपदार्थप्रधानः । यस्मिन् समासे उभयपदार्थस्य प्राधान्यं स द्वन्द्वसंज्ञक इत्यर्थः । पाणिपादमित्यादिद्वन्द्वेऽपि उभयपदार्थस्याऽप्राधान्यात् प्रायेणेत्युक्तम् ।

**भूतपूर्वः** ( १९४४ )—पूर्वं भूतः 'भूतपूर्वः' । 'पूर्व अम् भूत सु' इत्यलौकिकविग्रहे 'सह सुपा' इति समासे 'कृत्तद्धितसमासाश्च' इति समासत्वात् प्रातिपदिकसंज्ञायां 'सुपो धातुप्रातिपदिकयोः' इति सुब्लुकि 'पूर्वभूत' इति जाते 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इति पूर्व-भूतशब्दयोरुभयोरप्युपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति विनिगमकाऽभावादुभयोरपि पूर्वनिपाते प्राप्ते 'भूत पूर्वे चरट्' इति निर्देशात् भूतशब्दस्य पूर्वनिपाते एकदेशविकृतन्यायेन प्रातिपदिकत्वात् सौ रुत्वे विसर्गे तत्सिद्धिः ।

इति सोत्तरायां प्रश्नावल्यां केवलसमासः ।

---

# अथ अव्ययीभावसमासः

अधिहरि ( १९३२, ४५ )—हरौ इति 'अधिहरि'। हरि ङि अधि इति स्थिते 'अव्ययम्–' इति सूत्रेण अव्ययीभावसमासे समासविधायकसूत्रेऽव्ययमिति प्रथमान्तपदनिर्दिष्टस्य 'अधी'त्यस्य 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इत्यनेन उपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति तस्य पूर्वनिपाते 'अधि हरि ङि' इति जाते समासत्वात् प्रातिपदिकत्वे 'सुपो धातुः' इति सुब्लुकि एकदेशविकृतन्यायेन प्रातिपदिकत्वात् समुदायात् सौ 'अव्ययीभावश्च' इत्यव्ययत्वात् 'अव्ययादाप्सुपः' इति सोर्लुकि 'अधिहरि' इति सिद्धम्।

अधिगोपम् ( १९५१ )—गां पातीति 'गोपाः' तस्मिन्नित्यधिगोपम्। 'गोपा ङि अधि' इति स्थिते 'अव्ययम्–' इति समासे 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इति 'अधी' त्यस्योपसर्जनसंज्ञायाम् 'उपसर्जनं' पूर्वम्' इति तस्य पूर्वनिपाते समासत्वात्प्रातिपदिकत्वेन सुपो लुकि 'अव्ययीभावश्च' इत्यनेन नपुंसकसंज्ञायाम् 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति 'गोपा' इत्यस्य ह्रस्वत्वे 'अधिगोप' इति स्थिते एकदेशविकृतन्यायेन समुदायेन समासत्वात् सौ अव्ययत्वात् सोर्लुकि प्राप्ते 'नाऽव्ययीभावादतोऽम्त्वपञ्चम्याः' इति तन्निषेधे सोरमि 'अमि पूर्वः' इति पूर्वरूपे तत्सिद्धिः।

उपकृष्णम् ( १९२१, २५, ४७ )—कृष्णस्य समीपमुपकृष्णम्। 'कृष्ण ङस् उप' इत्यलौकिकविग्रहे 'अव्ययम्–' इति सूत्रेण सामीप्यार्थवाचक 'उप' शब्देन सह समासे 'प्रथमानिर्दिष्टम्–' इति 'उप' इत्यस्योपसर्जनसंज्ञायाम् उपसर्जनं पूर्वम्' इति तस्य पूर्वप्रयोगे समासत्वात्प्रातिपदिकत्वेन सुपो लुकि समुदायात् टाविभक्तौ 'तृतीयासप्तम्योर्बहुलम्' इत्यमादेशे पूर्वरूपे 'उपकृष्णम्' इति। अमादेशाऽभावपक्षे इनादेशे गुणे 'उपकृष्णेन' इति। प्रथमाविभक्तावपि 'अव्ययीभावश्चे' त्यव्ययत्वात् सुब्लुकि प्राप्ते 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इति तन्निषेधे सोरमि पूर्वरूपे 'उपकृष्णम्' इति सप्तमीविभक्तौ तु 'उपकृष्णम्–उपकृष्णे इति बोध्यम्।

सुमद्रम् ( १९२४ )—'मद्र आम् सु' इत्यलौकिकविग्रहे 'अव्ययम्–' इति सूत्रेण समृद्ध्यर्थक 'सु' इत्यव्ययेन सह समासे 'सु' इत्यस्य 'प्रथमानिर्दिष्टम्–' इत्युपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति तस्य पूर्वनिपाते समासत्वात्प्रातिपदिकत्वेन

सुब्लुकि समुदायाद्बाविभक्तौ 'तृतीयासप्तम्योर्बहुलम्' इत्यमादेशे पूर्वरूपे 'सुमद्रम्' इति। पक्षे इनादेशे गुणे णत्वे 'सुमद्रेण' इति। प्रथमाविभक्तावपि 'अव्ययीभावश्चे'त्यव्ययत्वात् सुब्लुकि प्राप्ते 'नाव्ययीभावात्' इति तन्निषेधे सोरमि पूर्वरूपे 'सुमद्रम्' इति। सप्तमीविभक्तौ तु सुमद्रम्–सुमद्रे इति।

अतिहिमम् ( १९३४ )—अत्ययार्थक 'अति' इत्यव्ययेन सह 'अव्ययम्–' इति सूत्रेण समासे 'प्रथमानिर्दिष्टम्–' इत्यनेन अतेरुपसर्जनसंज्ञायां पूर्वनिपाते समासत्वात्प्रातिपदिकत्वेन सुब्लुकि समुदायात् सौ 'अव्ययीभावश्चे'त्यव्ययत्वात्सुब्लुकि प्राप्ते 'नाव्ययीभावात्–' इति तन्निषेधे सोरमि पूर्वरूपे उक्तं रूपं सिद्धम्। तृतीयाविभक्तौ तु 'तृतीयासप्तम्योर्बहुलम्' इत्यमादेशे पूर्वरूपे 'अतिहिमम्' इति। पक्षे इनादेशे गुणे 'अतिहिमेन' इति च भवति।

सहरि ( १९३८ )—हरेः सादृश्यं सहरि। 'हरि ङस् सह' इति विग्रहे सादृश्यार्थक 'सह' इत्यव्ययेन सह 'अव्ययम्–' इति सूत्रेण समासे 'प्रथमानिर्दिष्टम्–' इति सहेत्यस्योपसर्जनसंज्ञायां पूर्वनिपाते समासत्वात्प्रातिपदिकत्वेन सुपो लुकि 'अव्ययीभावे चाकाले' इति सहस्य सादेशे समुदायात् सौ 'अव्ययीभावश्चे'त्यव्ययत्वात् सुब्लुकि तत्सिद्धिः।

पञ्चगङ्गम् ( १९२३, ३९, ४६ )—'पञ्चनां गङ्गानां समाहारः' इति लौकिकविग्रहः। अत्र 'पञ्चन् आम् गङ्गा आम्' इत्यलौकिकविग्रहे 'समाहारे चायमिष्यते' इति वार्तिकबलात् 'नदीभिश्च' इति समासे सुब्लुकि 'नलोपः प्रातिपदिकान्तस्य' इति नलोपे 'एकविभक्ति चापूर्वनिपाते' इति 'गङ्गा' इत्यस्योपसर्जनत्वाद् 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वे समुदायात् सौ 'अव्ययीभावश्चे'त्यव्ययत्वात् सोर्लुकि प्राप्ते 'नाव्ययीभावात्–' इति तन्निषेधे सोरमि पूर्वरूपे तत्सिद्धिः। तृतीयाविभक्तौ तु 'तृतीयासप्तम्योः–' इति अमादेशे पूर्वरूपे 'पञ्चगङ्गम्' इति। पक्षे इनादेशे गुणे 'पञ्चगङ्गेन' इति। सप्तमीविभक्तौ तु पञ्चगङ्गम्–पञ्चगङ्गे इति रूपद्वयं भवति।

उपशरदम् ( १९४८, ५० )—'शरद् ङस् उप इत्यलौकिकविग्रहे सामीप्यार्थक 'उप' इत्यव्ययेन सह 'अव्ययम्–' इति सूत्रेण समासे अव्ययीभावे 'शरत्प्रभृतिभ्यः' इति टचि अनुबन्धलोपे उपेत्यस्योपसर्जनसंज्ञायां पूर्वनिपाते समासत्वात् प्रातिपदिकत्वेन सुपो लुकि समुदायात् सौ अव्ययत्वात् सुब्लुकि प्राप्ते 'नाव्ययीभावात्–' इति तन्निषेधे सोरमि पूर्वरूपे उक्तं रूपं जातम्। तृतीयासप्तमीविभक्तौ तु उपशरदम्–उपशरदेन, उपशरदम्–उपशरदे इति रूपाणि भवन्ति।

**उपराजम्** ( १९३३ )—राज्ञः समीपमुपराजमिति लौकिकविग्रहः । 'राजन् ङस् उप' इत्यलौकिकविग्रहे सामीप्यार्थक 'उप' इत्यव्ययेन सह 'अव्ययम्–' इति सूत्रेण समासे 'प्रथमानिर्दिष्टम्–' इत्युपसर्जनसंज्ञायां पूर्वप्रयोगे 'अनश्च' इति टचि अनुबन्धलोपे सुब्लुकि भत्वात् 'नस्तद्धिते' इति टिलोपे समुदायात् सौ अव्ययत्वात् सुब्लुकि प्राप्ते 'नाव्ययीभावादि'ति तन्निषेधे सोरमि पूर्वरूपे 'उपराजम्' इति । तृतीयासप्तमीविभक्तौ तु 'तृतीयासप्तम्योर्बहुलम्' इत्यम्भावे उपराजम्–उपराजेन, 'उपराजम्–उपराजे' इति रूपाणि भवन्ति ।

**अध्यात्मम्** ( १९४०, ४६ )—'आत्मन् ङि अधि' इत्यलौकिकविग्रहे 'अव्ययम्–' इति समासे 'प्रथमानिर्दिष्टम्–' इत्युपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्' इति पूर्वप्रयोगे समासत्वात् प्रातिपदिकसंज्ञायां सुपो लुकि यणि 'अध्यात्मन्' इति स्थिते 'अनश्च' इति टचि अनुबन्धलोपे भत्वात् 'नस्तद्धिते' इति टिलोपे समुदायात् सौ अव्ययत्वात् सुब्लुकि प्राप्ते 'नाव्ययीभावात्' इति तन्निषेधे सोरमि पूर्वरूपे उक्तं रूपं सिद्धम् । तृतीया–सप्तमीविभक्तौ तु अध्यात्मम्–अध्यात्मेन, अध्यात्मम्–अध्यात्मे इति रूपाणि भवन्ति ।

**उपचर्मम्**—'चर्मन् ङस् उप' इति विग्रहे 'अव्ययम्–' इति समासे 'उपे' त्यस्योपसर्जनसंज्ञायां पूर्वप्रयोगे सुब्लुकि 'नपुंसकादन्यतरस्याम्' इति पाक्षिके टचि 'नस्तद्धिते' इति टिलोपे समुदायात् सौ 'नाव्ययीभावात्–' इति सोरमि पूर्वरूपे तत्सिद्धिः । टजभावे तु 'अव्ययादाप्सुपः' इति सोर्लुकि नलोपे 'उपचर्म' इति ।

इति सोत्तरायां प्रश्नावल्यामव्ययीभावप्रकरणम् ।

---

# अथ तत्पुरुषप्रकरणम्

**कृष्णश्रितः**—'कृष्ण अम् श्रित सु' इत्यलौकिकविग्रहे 'द्वितीया श्रिते'ति समासे सुब्लुकि समासशास्त्रघटक'द्वितीये'ति प्रथमान्तपदनिर्दिष्ट 'कृष्णे'त्यस्योपसर्जनसंज्ञायां पूर्वनिपाते एकदेशविकृतन्यायेन समुदायात् प्रातिपदिकत्वेन सौ रुत्वे विसर्गे तत्सिद्धिः ।

**शङ्कुलाखण्डः** ( १९२० )—शङ्कुलया खण्डः शङ्कुलाखण्डः । शङ्कुला

टा खण्ड सु इत्यलौकिकविग्रहे 'तृतीयातत्कृते'ति समासत्वात् प्रातिपदिकत्वेन सुब्लुकि समुदायात् सौ रुत्वे विसर्गे तत्सिद्धम् ।

**नखनिर्भिन्नः**—( १९२०, २२ )—'नख भिस् निर्भिन्न सु' इति विग्रहे 'समासप्रत्ययविधौ प्रतिषेधः' इति समासविधौ तदन्तविधिनिषेधेन 'निर्भिन्ने' त्यस्य कृदन्तत्वाऽभावात् समासाप्राप्तौ 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति परिभाषाबलात् 'कर्तृकरणे कृताबहुलम्' इत्यनेन समासे सुब्लुकि समुदायात् सौ रुत्वे विसर्गे तत्सिद्धम्ः ।

**यूपदारु** ( १९३६ )—'यूप ङे दारु सु' इत्यलौकिकविग्रहे 'चतुर्थी तदर्थार्थ-' इति विभाषया समासे सुब्लुकि समुदायात् सौ 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इत्यस्य जागरूकत्वेन नपुंसकत्वात् सोर्लुकि तत्सिद्धम् । समासाऽभावे 'यूपाय दारु' इत्यपि भवति ।

**द्विजार्थः सूपः**—द्विजाय अयमिति द्विजार्थः । 'द्विज ङे अर्थ सु' इत्यलौकिकविग्रहे 'अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्' इति वार्तिकेन नित्यसमासे सूपशब्दलिङ्गत्वे च विहिते समासत्वात्प्रातिपदिकत्वेन सुब्लुकि सवर्णदीर्घे समुदायात् सौ रुत्वे विसर्गे तत्सिद्धम् । **'द्विजार्था यवागूः'** इत्यत्र तु 'अर्थेन नित्यसमास' इति नित्यसमासे यवागूशब्दलिङ्गत्वे च विहिते सुब्लुकि सवर्णदीर्घे स्त्रीत्वाट्टापि समुदायात् सौ हल्ङ्यादिना सुलोपे तत्सिद्धम् । समासविधायकवार्तिकबलादेवाऽत्र 'परवल्लिङ्गम्—' इत्यस्य न प्रवृत्तिः ।

**चोरभयम्** ( १९४७ )—अत्र 'पञ्चमी भयेन' इति समासे सुब्लुकि समुदायात् सौ 'परवल्लिङ्गम्—' इति नपुंसकत्वात् सोरमि पूर्वरूपे तत्सिद्धम् ।

**राजपुरुषः** ( १९३२, ४८ )—राज्ञः पुरुषः राजपुरुषः । 'राजन् ङस् पुरुष सु' इत्यलौकिकविग्रहे 'षष्ठी' इति समासे सुब्लुकि अन्तर्वर्तिविभक्तिमाश्रित्य पदत्वान्नलोपे समुदायात् सौ रुत्वे विसर्गे तन्निष्पन्नम् ।

**अर्धपिप्पली** ( १९५२ )—'अर्ध सु पिप्पली ङस्' इत्यलौकिकविग्रहे 'अर्धं नपुंसकम्' इति समासे समासशास्त्रघटकप्रथमान्तपदनिर्दिष्ट 'अर्ध' सु इत्यस्य उपसर्जनसंज्ञायां पूर्वनिपाते सुब्लुकि समुदायात सौ विभक्तिकार्ये उक्तं रूपं सिद्धम् । अत्र पिप्पलीशब्दस्य नियतविभक्तिकत्वेऽपि 'एकविभक्तावषष्ठ्यन्तवचनम्' इति निषेधादुपसर्जनत्वाऽभाद् ह्रस्वो नेति तत्त्वविदः ।

**पूर्वेषुकामशमी**—पूर्वश्चासौ इषुकामशमी पूर्वेषुकामशमी। देशविशेषस्य संज्ञेयम्। 'दिक्संख्ये संज्ञायाम्' इत्यनेनात्र समासः। न च 'विशेषणं विशेष्येण बहुलम्' इत्येव सिद्धे किमर्थमिदमिति वाच्यम् 'संज्ञायामेवेति' नियमार्थं तस्यावश्यकत्वात्।

**पौर्वशालः** ( १९४१, ४५, ५० )—पूर्वस्यां शालायां भवः इति लौकिकविग्रहे 'पूर्वा ङि शाला ङि' इति स्थिते 'तद्धितार्थोत्तरपदसमाहारे च' इति समासे सुब्लुकि 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति 'पूर्वा'शब्दस्य पुंवत्वे 'दिक्पूर्वपदादसंज्ञायां ञः' इति ञप्रत्यये 'यस्येति च' इत्याकारलोपे 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ समुदायात् सौ विभक्तिकार्ये तत्सिद्धिम्।

**पञ्चगवधनः** ( १९२०,२२,२६ )—पञ्च गावो धनं यस्य स 'पञ्चगवधनः'। अत्र पञ्चन् जस् गो जस् धन सु' इति त्रिपदे बहुव्रीहौ अवान्तर-'पञ्चन्-गोशब्दयोः' 'तद्धितार्थे'ति विभाषया समासे प्राप्ते 'द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्' इति नित्ये समासे सुब्लुकि अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वात् पञ्चन्शब्दस्य नस्य लोपे "पञ्चगो" इत्यस्मात् 'गोरतद्धितलुकि' इति टचि अनुबन्धलोपे अवादेशे 'पञ्चगव' इति बहुव्रीहावावान्तरे 'तत्पुरुषे' जाते बहुव्रीहिसमासस्यापि प्रातिपदिकत्वात् सुलोपे समुदायात् सौ रुत्वे विसर्गे 'पञ्चगवधनः' इति।

**पञ्चगवम्** ( १९२७, ३३, ३४, ४९ )—'पञ्चन् आम् गो आम्' इति विग्रहे 'तद्धितार्थ-' इति समासे सुब्लुकि अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वान्नलोपे 'गोरतद्धितलुकि' इति टचि अनुबन्धलोपे अवादेशे 'संख्यापूर्वो द्विगुः' इति द्विगुसंज्ञायां 'द्विगुरेकवचनम्' इत्येकवद्भावे समुदायात् सौ 'स नपुंसकम्' इति नपुंसकत्वात् सोरमि पूर्वरूपे उक्तं रूपं सिद्धम्।

**शाकपार्थिवः**—शाकः प्रियो यस्य स शाकप्रियः। शाकप्रियः श्चासौ पार्थिवश्चेति विग्रहे बहुव्रीहिगर्भो विशेषणसमासः। अत्र 'शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्' इति वार्तिकेन पूर्वखण्डे बहुव्रीहौ उत्तरपदस्य प्रियशब्दस्य लोपः।

**अनश्वः** ( १९२४, २८ ) न अश्वः अनश्वः। 'अश्व सु न' इत्यलौकिकविग्रहे 'नञ्' इति सूत्रेण समासे समासविधायकशास्त्रघटकप्रथमान्तपदनिर्दिष्ट 'न' इत्यस्योपसर्जनसंज्ञायां पूर्वनिपाते सुब्लुकि 'नलोपो नञः' इति नलोपे 'अ अश्व' इति स्थिते 'तस्मान्नुडचि' इति नुटि अनुबन्धलोपे समुदायात् सौ रुत्वे विसर्गे तत्सिद्धम्।

शुक्लीकृत्य—न शुक्लः अशुक्लः, अशुक्लं शुक्लं कृत्वा इति विग्रहे 'कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः' इति शुक्लशब्दात् च्विप्रत्यये 'अस्य च्वौ' इतीत्वे च्वेर्लोपे 'ऊर्यादिच्विडाचश्च' इति 'शुक्ली'त्यस्य गतिसंज्ञायां 'कुगतिप्रादयः' इत्यनेन समासे 'क्त्वो ल्यप्' इति ल्यपि तुकि अनुबन्धलोपे समुदायात् सौ अव्ययत्वात् सुब्लुकि तत्सिद्धिः।

**अतिमालः** ( १९२३, ४२ )—मालामतिक्रान्तः अतिमालः। 'माला अम् अति' इति विग्रहे 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासे समासशास्त्रघटकप्रथमान्तपदनिर्दिष्ट 'अती'त्यस्योपसर्जनसंज्ञायां पूर्वनिपाते सुब्लुकि 'एकविभक्तिचापूर्वनिपाते' इति नियतविभक्तिकस्योपसर्जनसंज्ञायां 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वे समुदायात् सौ रुत्वे विसर्गे 'अतिमालः' इति।

**निष्कौशाम्बिः** ( १९४६ )—निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः। अत्र 'निरादयः क्रान्ताद्यर्थे पञ्चम्याः' इति समासे सुब्लुकि 'एकविभक्तिचापूर्वनिपाते' इति कौशाम्बीशब्दस्योपसर्जनसंज्ञायां 'गोस्त्रियोः—' इति ह्रस्वे षत्वे विभक्तिकार्ये उक्तं रूपं जातम्।

**कुम्भकारः** ( १९२१, ४२ )—कुम्भं करोतीत्यर्थे 'कर्मण्यण्' इत्यणि 'कुम्भ अस् कृ अण्' इत्यलौकिकविग्रहे 'अचो ञ्णिति' इति वृद्धौ 'तत्रोपपदं सप्तमीस्थम्' इति कुम्भशब्दस्योपपदसंज्ञायाम् 'उपपदमतिङ्' इति समासे सुपो लुकि 'कुम्भकार' इति भूते समासत्वात्सौ रुत्वे विसर्गे उक्तं रूपं सिद्धम्।

**व्याघ्री** ( १९५० )—विशेषेण आसमन्ताज्जिघ्रतीति व्याघ्री। वि आङ् पूर्वक 'घ्रा' धातोः 'आतश्चोपसर्गे कः' इति कप्रत्यये 'आतो लोप इटि च' इत्यालोपे 'गतिश्च' इति गतिसंज्ञायां 'गतिकारकोपपदानाम्—' इति परिभाषया सुबुत्पत्तेः प्राक् घ्रशब्देन आङः 'कुगतिप्रादायः' इति समासे ततः आघ्रशब्देन वेर्गतिसमासे यणि 'व्याघ्र' इति तस्मात् स्त्रीत्वविवक्षायां 'जातेरस्त्रीविषयादयोपधात्' इति ङीषि भत्वाद्लोपे विभक्तिकार्ये 'व्याघ्री' इति।

**अश्वक्रीती** ( १९२६ )—अश्वेन क्रीता अश्वक्रीती। 'अश्व टा क्रीत' इति विग्रहे 'गतिकारके'ति परिभाषया क्रीतशब्दात् सुबुत्पत्तेः पूर्वमेव 'कर्तृकरणे कृताबहुलम्' इति समासे सुब्लुकि 'अश्वक्रीत' इति, तस्मात् स्त्रीत्वविवक्षायां 'क्रीतात्करणपूर्वात्' इति ङीषि भत्वादलोपे विभक्तिकार्ये तत्सिद्धिः।

**कच्छपी**—कच्छेन पिबतीति विग्रहे पाधातो 'सुपि स्थः' इत्यत्र 'सुपीति योगविभागात् कप्रत्यये 'आतो लोप इटि च' इत्यालोपे 'गतिकारके'ति परिभाषया पशब्दात्सुबुत्पत्तेः प्राक् 'कच्छ टा प' इति स्थिते 'उपपदमतिङ्' इति समासे सुब्लुकि जातिलक्षणङीषि विभक्तिकार्ये तत्सिद्धम् ।

**द्व्यङ्गुलम्**—द्वे अङ्गुली प्रमाणमस्येति लौकिकविग्रहे 'द्वि औ अङ्गुलि औ' इत्यलौकिकविग्रहे 'तद्धितार्थे'ति समासे सुब्लुकि 'तत्पुरुषस्याङ्गुलेः संख्याऽव्ययादेः' इत्यचि यणि भत्वात् 'यस्येति च' इतीकारलोपे विभक्तिकार्ये तत्सिद्धम् ।

**अहोरात्रः** ( १९३८ )—अहश्च रात्रिश्च अहोरात्रः । 'अहन् सु रात्रि सु' इति विग्रहे द्वन्द्वसमासे सुब्लुकि 'अहः सर्वैकदेश–' इत्यचि भत्वात् 'यस्येति च' इतीकारलोपे 'परवल्लिङ्गम्–' इति बाधित्वा 'रात्राह्नाहाः पुंसि' इति पुंस्त्वे 'रूपरात्रिरथन्तरेषु रुत्वं वाच्यम्' इति नस्य रुत्वे उत्वे गुणे विभक्त्यादिकार्ये उक्तं रूपं सिद्धम् ।

**सर्वरात्रः** ( १९२६ )—सर्वा चासौ रात्रिरिति सर्वरात्रः । 'सर्वा सु रात्रि सु' इति विग्रहे 'पूर्वकालैकसर्वजरत्–' इति समासे सुब्लुकि 'अहःसर्वैकदेश–' इत्यचि भत्वात् 'यस्येति च' इतीकारलोपे 'रात्राह्नाहाः पुंसि' इति पुंस्त्वे 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति सर्वाशब्दस्य पुंवद्भावे प्रातिपदिककार्ये 'सर्वरात्रः' इति ।

**परमराजः** ( १९२५, २९, ३०, ३५, ४७, ४९ )—परमश्चासौ राजा परमराजः । 'परम सु राजन् सु' इत्यलौकिकविग्रहे 'सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः' इति समासे सुब्लुकि 'राजाहःसखिभ्यष्टच्' इति टचि भसंज्ञायां 'नस्तद्धिते' इति टिलोपे विभक्तिकार्ये तत्सिद्धम् ।

**महाराजः** ( १९२७, ५० )—महांश्चासौ राजा महाराजः । 'महत् सु राजन् सु' इत्यलौकिकविग्रहे 'सन्महत्–' इति समासे सुब्लुकि 'राजाहःसखिभ्यष्टच्' इति टचि भत्वात् 'नस्तद्धिते' इति टिलोपे 'आन्महतःसमानाधिकरणजातीययोः' इत्यात्वे विभक्तिकार्ये तत्सिद्धम् ।

**द्वादश** ( १९२२ )—द्वौ च दश चेति विग्रहे द्वन्द्वसमासे सुब्लुकि 'द्व्यष्टनः–' इत्यात्वे विभक्तिकार्ये तत्सिद्धिः ।

**अर्धपिप्पली** ( १९३७, ५२ )—अर्धं पिप्पल्याः अर्धपिप्पली । 'अर्ध सु पिप्पली ङस्' इत्यलौकिकविग्रहे 'अर्धं नपुंसकम्' इति समासे सुब्लुकि 'परवल्लिङ्गम्–' इति समुदायस्य स्त्रीत्वे विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**पञ्चकपालः**—'पञ्चन् सुप् कपाल सुप्' इत्यलौकिकविग्रहे 'तद्धितार्थे-' इति समासे सुलुकि 'संस्कृतं भक्षाः' इत्यणि 'द्विगोर्लुगनपत्ये' इत्यणो लुकि कपाल-शब्दस्य नपुंसकत्वात् 'परवल्लिङ्गम्-' इति पञ्चकपालशब्दस्याऽपि नपुंसकत्वे प्राप्ते 'द्विगुप्राप्तापन्न-' इति तन्निषेधे विभक्तिकार्ये तत्सिद्धम्। (पञ्चसु कपालेषु संस्कृतः-पञ्चकपालः, पुरोडाशः)

**अलङ्कुमारिः** (१९२६)—'कुमारी ङ अलम्' इति विग्रहे 'द्विगुप्राप्तापन्न-' इति ज्ञापकात् समासे परपदलिङ्गत्वनिषेधे च कृते 'एकविभक्ति चापूर्वनिपाते' इत्यु-पसर्जनसंज्ञायां 'गोस्त्रियोः-' इति ह्रस्वे विभक्तिकार्ये तत्सिद्धम्।

**अर्धर्चम्** (१९४८)—ऋचोऽर्धमिति विग्रहे 'अर्धं नपुंसकम्' इति समासे अर्धशब्दस्योपसर्जनसंज्ञायां पूर्वनिपाते सुब्लुकि 'ऋक्पूरब्धूः-' इत्यप्रत्यये गुणे रपरत्वे 'अर्धर्चाः पुंसि च' इति नपुंसकत्वे विभक्तिकार्ये 'अर्धर्चम्' इति। पुंस्त्वे तु 'अर्धर्चः' इति भवति।

इति सोत्तरायां प्रश्नावल्यां तत्पुरुषप्रकरणम्।

---

# अथ बहुव्रीहिप्रकरणम्

**कण्ठेकालः**—कण्ठे कालो यस्येति विग्रहे 'सप्तमी विशेषणे बहुव्रीहौ' इति ज्ञापकात् समासे सप्तम्यन्तस्य 'कण्ठे' इत्यस्य पूर्वनिपाते च 'हलन्तात् सप्तम्याः संज्ञायाम्' इति सप्तम्याः अलुकि सुपो लुकि समुदायात् सौ रुत्वे विसर्गे च कृते तत्सिद्धिः।

**प्रपर्णः**— प्रकृष्टं पतितं प्रपतितम्। 'प्रादयो गताद्यर्थे' इति समासः। प्रपतितं पर्णं यस्मादिति विग्रहे 'प्रादिभ्यो धातुजस्य-' इति वार्तिकेन समासे प्रपतितेति पूर्वपदे धातुजस्य उत्तरपदस्य लोपे च विहिते विभक्तिकार्ये तत्सिद्धम्।

**चित्रगुः** (१९२५, २९, ३०, ३२, ३४, ४१, ४७, ५०, ५१, ५२)—चित्रा गावो यस्येति लौकिकविग्रहे 'चित्रा जस् गो जस्' इत्यलौकिकविग्रहे 'अनेक-मन्यपदार्थे' इति समासे सुपो लुकि 'स्त्रियाः पुंवत्-' इति 'चित्रा' शब्दस्य पुंवद्भा-वाट्टापो निवृत्तौ 'एकविभक्ति चापूर्वनिपाते' इति गोशब्दस्योपसर्जनत्वाद् 'गोस्त्रि-

योरुपसर्जनस्य' इति गोशब्दस्यौकारस्य ह्रस्वे समुदायात् सौ रुत्वे विसर्गे च कृते 'चित्रगुः' इति सिद्धम् ।

**रूपवद्भार्यः** ( १९४० )—रूपवती भार्या यस्येति विग्रहे 'अनेकमन्यपदार्थे' इति समासे सुपो लुकि 'स्त्रियाः पुंवत्–' इति पुंवद्भावे ङीपो निवृत्तौ 'एकविभक्ति चापूर्वनिपाते' इत्युपसर्जनसंज्ञायां 'गोस्त्रियोः–' इति भार्याशब्दस्य ह्रस्वे विभक्तिकार्ये तत्सिद्धिः ।

**कल्याणीपञ्चमाः**—पञ्चानां पूरणीति विग्रहे 'तस्य पूरणे डट्' इति पञ्चन्-शब्दात् डटि 'नान्तादसंख्यादेर्मट्' इति डटो मटि नलोपे टित्वात् ङीपि अलोपे पञ्चमीति । ततः 'कल्याणी सु पञ्चमी सु' इति विग्रहे समासे सुपो लुकि पञ्चमी-शब्दस्य पूरणप्रत्ययान्तत्वेन तस्मिन् परे 'स्त्रियाः पुंवत्–' इति पुंवद्भावाऽप्राप्तौ 'अप्पूरणीप्रमाण्योः' इत्यपि भत्वात् 'यस्येति च' इतीकारलोपे विभक्तिकार्येतत्सिद्धिः ।

**दीर्घसक्थः** ( १९३३ )—दीर्घे सक्थिनी यस्येति विग्रहे 'अनेकमन्यपदार्थे' इति समासे सुपो लुकि 'दीर्घ सक्थि' इति स्थिते 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्' इति षचि भत्वात् 'यस्येति च' इतीकारलोपे विभक्तिकार्ये तत्सिद्धम् ।

**जलजाक्षी** ( १९३० )—जलजे इव अक्षिणी यस्या इति विग्रहेसमासे सुपो लुकि 'बहुव्रीहौ सक्थ्यक्ष्णोः–' इति षचि 'जलज अक्षि अ' इति स्थिते भत्वात् यस्येति च' इतीलोपे सवर्णदीर्घे 'षिद्गौरादिभ्यश्च' इति ङीषि भत्वादलोपे विभक्तिकार्ये तत्सिद्धिः ।

**द्विमूर्धः** ( १९४८ )—द्वौ मूर्धानौ यस्येति विग्रहे बहुव्रीहिसमासे सुपो लुकि 'द्वित्रिभ्यां षः मूर्ध्नः' इति षप्रत्यये भत्वात् 'नस्तद्धिते' इति टिलोपे विभक्तिकार्ये तत्सिद्धिः । एवं **'त्रिमूर्धः'** ( १९३४ ) इत्यपि ।

**अन्तर्लोमः** ( १९४९ )—अन्तर्लोमानि यस्येति विग्रहे 'अनेकमन्यपदार्थे' इति समासे सुपो लुकि 'अन्तर्बहिर्भ्यां च लोम्नः' इत्यपि भत्वात् टिलोपे विभक्त्या-दिकार्ये तत्सिद्धिः ।

**सुपात्** ( १९२६ )—सु=शोभनौ, पादावस्येति विग्रहे बहुव्रीहिसमासे सुपो लुकि 'संख्यासुपूर्वस्य' इति समासान्तलोपे विभक्त्यादिकार्ये तत्सिद्धिः ।

**महायशस्कः** ( १९२४ )—महद्यशो यस्येति विग्रहे 'अनेकमन्यपदार्थे'

इति समासे सुपो लुकि 'शेषाद्विभाषा' इति कपि 'आन्महतः–' इत्यात्वे सस्य रुत्वे विसर्गे 'सोऽपदादौ' इति विसर्गस्य सत्वे विभक्तिकार्ये तत्सिद्धिः। कपोऽभावपक्षे तु 'अत्वसन्तस्य चाऽधातोः' इति दीर्घे 'महायशाः' इति भवति।

इति सोत्तरायां प्रश्नावल्यां बहुव्रीहिप्रकरणम्।

# अथ द्वन्द्वसमासप्रकरणम्

हरिहरौ (१९५०) 'हरि सु हर सु' इति विग्रहे 'चार्थे द्वन्द्वः' इति समासे सुब्लुकि 'द्वन्द्वे घि' इति घिसंज्ञकस्य हरिशब्दस्य पूर्वनिपाते समुदायादौ वृद्धौ तत्सिद्धिः।

शिवकेशवौ (१९४७, ४९)—शिवश्च केशवश्चेति विग्रहे 'चार्थे द्वन्द्वः' इति समासे सुब्लुकि 'अल्पाच्तरम्' इति शिवशब्दस्य पूर्वनिपाते विभक्तिकार्ये तत्सिद्धिः।

पितरौ (१९२३, ४८)—माता च पिता चेति लौकिकविग्रहे 'मातृ सु पितृ सु' इत्यलौकिकविग्रहे 'चार्थे द्वन्द्वः' इति समासे सुब्लुकि 'पिता मात्रा' इति पाक्षिके पितृशब्दस्यैकशेषे (मातृशब्दस्य लोपे) प्रातिपदिकत्वाद् औ 'ऋतो ङि–' इति गुणे रपरत्वे 'पितरौ' इति। एकशेषाऽभावे 'मातापितरौ' इति। अत्र 'चार्थे द्वन्द्वः' इति समासे सुब्लुकि कृते "पितुर्दशगुणा माता गौरवेणातिरिच्यते" इति स्मृत्या मातुरभ्यर्हितत्वात् 'अभ्यर्हितं चे' ति पूर्वनिपाते 'आनङ् ऋतो द्वन्द्वे' इति मातृशब्दस्य आनङादेशे अनुबन्धलोपे नलोपे च कृते 'मातापितृ' इति भूते तस्माद् औ 'ऋतोङि–' इति गुणे रपरत्वे तत्सिद्धिः।

इति सोत्तरायां प्रश्नावल्यां द्वन्द्वप्रकरणम्।

# अथ समासान्तप्रकरणम्

अर्धर्चः (१९३७) ऋचोऽर्धमिति विग्रहे 'अर्धं नपुंसकम्' इति समासे समासशास्त्रघटकप्रथमान्तपदनिर्दिष्ट 'अर्ध' शब्दस्योपसर्जनसंज्ञायां पूर्वनिपाते सुब्लुकि 'ऋक्पूरब्धू–' इति अप्रत्यये गुणे रपरत्वे 'अर्धर्चाः पुंसि च' इति पुंस्त्वे विभक्तिकार्ये तत्सिद्धिः।

**सखिपथः** ( १९४० )—'सख्युः पन्थाः' इति विग्रहे षष्ठीसमासे सुब्लुकि ऋक्पूरब्धूः–' इति अप्रत्यये भत्वात् 'नस्तद्धिते' इति टिलोपे विभक्तिकार्ये तत्सिद्धिः।

**रम्यपथः** ( १९३१ )—'रम्यः पन्थाः यस्मिन्' इति विग्रहे 'अनेकमन्यपदार्थे' इति समासे सुब्लुकि 'ऋक्पूरब्धूः–' इति अप्रत्यये भत्वात् टिलोपे विभक्तिकार्ये तत्सिद्धिः।

**गवाक्षः** ( १९४४ )—गवामक्षीव गवाक्षः। 'गो आम् अक्षि सु' इति विग्रहे षष्ठीसमासे सुब्लुकि 'अक्ष्णोऽदर्शनात्' इत्यचि भत्वादिलोपे 'अवङ् स्फोटायनस्य' इत्यवङि सवर्णदीर्घे विभक्तिकार्ये तत्सिद्धिः।

**प्राध्वो रथः** ( १९३३ ) प्रगतोऽध्वानमिति विग्रहे 'अत्यादयः–' इति समासे सुब्लुकि 'उपसर्गादध्वनः' इत्यचि भत्वात् 'नस्तद्धिते' इति टिलोपे विभक्तिकार्ये तत्सिद्धिः।

**सुराजा** ( १९४२ ) सु=शोभनो राजेति विग्रहे 'कुगतिप्रादयः' इति समासे सुब्लुकि 'राजाहः सखिभ्यष्टच्' इति टचि प्राप्ते 'न पूजनात्' इति निषेधे स्वादिकार्ये तत्सिद्धिः।

इति सोत्तरायां प्रश्नावल्यां समासान्तप्रकरणम्।

---

# अथ तद्धिताः

## तत्रादौ साधारणप्रत्ययप्रकरणम्।

**आश्वपतम्** ( १९२९ )—अश्वपतेरपत्यम्, अश्वपतिना निर्वृत्तम्, अश्वपतेरिदमिति वा विग्रहे 'अश्वपत्यादिभ्यश्च' इत्यणि अनुबन्धलोपे प्रातिपदिकत्वात्(१)सुपो लुकि 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ 'यचि भम्' इति भत्वात् 'यस्येति च' इतीकारलोपे तद्धितान्तत्वात् सौ सोरमि पूर्वरूपे तत्सिद्धिः। (एवं गणपतेरपत्यादि गाणपतम्)

**दैत्यः** ( १९२४ )—दितेरपत्यमिति विग्रहे दितिशब्दात् 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इति ण्यप्रत्यये आदिवृद्धौ इलोपे विभक्तिकार्ये तत्सिद्धिः।

---

( १ ) सुबन्तात्तद्धितोत्पत्तिरिति पक्षे तद्धितान्तत्वात् प्रातिपदिकसंज्ञायां सुब्लुग्भवति। प्रातिपदिकात् तद्धितोत्पत्तिरिति पक्षे तु न सुब्लुक आवश्यकतेति सर्वत्र बोध्यम्।

**आदित्यः** (१९२९)—अदितेरपत्यमिति विग्रहे अदितिशब्दात् 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' इति ण्यप्रत्यये आदिवृद्धौ इलोपे विभक्तिकार्ये तत्सिद्धिः। यद्वा आदित्यस्यापत्यमिति विग्रहे आदित्यशब्दात् ण्यप्रत्यये आदिवृद्धौ 'यस्येति चे' त्यलोपे 'हलो यमां यमि लोपः' इति यलोपे विभक्तिार्ये तत्सिद्धिः।

**दैव्यम्** ( १९४४ )—देवस्यापत्यादीति विग्रहे 'देवाद्यञञौ' इति यञि आदिवृद्धौ अलोपे विभक्तिकार्ये तत्सिद्धिः। ( अञि तु दैवमिति )

**बाह्नीकः** ( १९३५ ) बहिर्भवः इति विग्रहे बहिष्शब्दात् 'ईकक् च' इति ईकक्प्रत्यये टिलोपे 'किति चे' त्यादिवृद्धौ विभक्तिकार्ये तत्सिद्धिः।

**औत्सः** ( १९३६ )—उत्सस्यापत्यादीति विग्रहे 'उत्सादिभ्योऽञ्' इत्यञि आदिवृद्धौ विभक्तिकार्ये तत्सिद्धिः।

इति सोत्तरायां प्रश्नावल्यां साधारणप्रत्ययप्रकरणम्।

---

# अथ अपत्याधिकारप्रकरणम्

**स्त्रैणः**—स्त्रीषु आसक्तः, स्त्रीषु भवः, स्त्रीणां समूहः, स्त्रिया अपत्यम्, इत्याद्यर्थे स्त्रीपुंसाभ्याम्–' इति नञ्प्रत्यये अनुबन्धलोपे 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ णत्वे विभक्तिकार्ये तत्सिद्धिः। एवं पुंसोऽपत्यमित्यादिविग्रहे स्नञ्प्रत्यये आदिवृद्धौ संयोगान्तलोपे विभक्तिकार्ये 'पौंस्नः' ( १९२१ ) इति।

**औपगवः** ( १९२८, ३२ )—उपगोरपत्यमिति विग्रहे उपगुशब्दात् 'तस्यापत्यम्' इत्यणि अनुबन्धलोपे 'तद्धितेष्वचामादेः' इत्यादिवृद्धौ 'औपगु अ' इति स्थिते 'अचो ञ्णिति' इति वृद्धिं बाधित्वा 'ओर्गुणः' इति गुणे अवादेशे तद्धितान्तत्वात् प्रातिपदिकसंज्ञायां सौ सस्य रुत्वे विसर्गे 'औपगवः' इति। उपगोर्गोत्रापत्यमिति विग्रहे तु उपगुशब्दादणि निष्पन्नाद् 'औपगव' शब्दात् 'अत इञ्' इति इञि प्राप्ते 'एको गोत्रे' इति सूत्रनियमात् उपगुशब्दादणेव, नतु अणि कृते अणन्तात्तस्मात् पुनरिञपीति बोध्यम्।

**गार्ग्यः** ( १९४७, ५०, ५१ )—गर्गस्य गोत्रापत्यमिति विग्रहे गर्गशब्दात् 'गर्गादिभ्यो यञ्' इति यञि आदिवृद्धौ भत्वात् 'यस्येति च' इत्यलोपे विभक्ति

कार्ये 'गार्ग्यः' इति। बहुत्वे तु गर्गस्य गोत्रापत्यानि इति विग्रहे यञि आदिवृद्धौ 'यञञोश्च' इति यञो लुकि 'निमित्ताऽपाये नैमित्तिकस्याप्यपायः' इति परिभाषया यञ्निमित्तवृद्धयभावे विभक्तिकार्ये

'गर्गाः' ( १९३० ) इति सिद्धम्।

वात्स्यः ( १९५२ )—वत्सस्यापत्यमिति विग्रहे 'गर्गादिभ्यो यञ्' इति यञि आदिवृद्धौ अलोपे विभक्तिकार्ये तत्सिद्धिः।

गार्ग्यायणः—गर्गस्य गोत्रापत्यं गार्ग्यः, गार्ग्यस्य अपत्यं गर्गस्य युवापत्यं गार्ग्यायणः। अत्र 'जीवति तु वंश्ये युवा' इति युवसंज्ञायां 'यञिञोश्च' इति यञन्तात् फकि 'आयनेयीनीयियः–' इति फस्य आयन्नादेशे भत्वात् 'यस्येति च' इत्यलोपे णत्वे विभक्तिकार्ये 'गार्ग्यायणः' इति।

दाक्षिः ( १९४८ ) दक्षस्यापत्यमिति विग्रहे 'अत इञ्' इति इञि आदिवृद्धौ भत्वादलोपे विभक्तिकार्ये तत्सिद्धिः।

औडुलोमिः—उडूनि नक्षत्राणीव लोमानि यस्य स उडुलोमा। उडुलोम्नोऽपत्यमिति विग्रहे 'बाह्वादिभ्यश्च' इतीञि आदिवृद्धौ 'नस्तद्धिते' इति टिलोपे विभक्तिकार्ये तत्सिद्धिः। उडुलोम्नोऽपत्यानीति विग्रहे तु 'लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः' इति वार्तिकेन अकारप्रत्यये टिलोपे विभक्तिकार्ये उडुलोमाः' इति।

शैवः—( १९४१ ) शिवस्य गोत्रापत्यमिति विग्रहे 'शिवादिभ्योऽण्' इत्यणि आदिवृद्धौ भत्वादलोपे विभक्तिकार्ये 'शैवः' इति।

श्वाफल्कः ( १९३८ ) श्वफल्कस्यापत्यमिति विग्रहे 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इत्यणि आदिवृद्धौ भत्वादलोपे विभक्तिकार्ये तत्सिद्धिः।

द्वैमातुरः ( १६४०, ४२ )—द्वयोर्मात्रोरपत्यमिति विग्रहे 'तद्धितार्थे'ति समासे सुब्लुकि 'मातुरुत्संख्यासंभद्रपूर्वायाः' इति द्विमातृशब्दादणि ऋकारस्य उदादेशे च रपरत्वे आदिवृद्धौ विभक्तिकार्ये तत्सिद्धिः।

षाण्मातुरः ( १९२९, ३४ ) षण्णां मातॄणामपत्यमिति विग्रहे 'तद्धितार्थे'ति समासे सुब्लुकि षस्य जश्त्वेन डकारे तस्य 'यरोऽनुनासिके–' इति णत्वे षण्मातृशब्दात् 'मातुरुत्संख्ये'ति अणि उत्वे रपरत्वे आदिवृद्धौ विभक्तिकार्ये तत्सिद्धिः।

वैनतेयः ( १९४९, ५१ ) विनता नाम गरुडमाता, तस्याः अपत्यमिति

विग्रहे 'स्त्रीभ्यो ढक्' इति ढकि 'आयनेयी' इति ढस्य एयादेशे भत्वात् 'यस्येति च' इत्याकारलोपे 'किति च' इत्यादिवृद्धौ विभक्तिकार्ये तत्सिद्धिः।

कानीनः (१९२२) कन्याया अपत्यमिति विग्रहे 'कन्यायाः कनीन च' इति अणि कन्यायाः कनीनादेशे अलोपे विभक्तिकार्ये तत्सिद्धिः।

**राजन्यः** (१९२५, ३३, ४६, ५१)—क्षत्रियात् क्षत्रियायां स्वभार्यायामुत्पन्नो राजन्यः। अत्र 'राजश्वशुराद्यत्' इत्यनेन राजन्शब्दात् जातौ यत्प्रत्यये 'ये चाभावकर्मणोः' इति प्रकृतिभावाट्टिलोपाऽभावे विभक्तिकार्ये 'राजन्यः' इति। जातिमात्राऽभावे तु राज्ञोऽपत्यमिति विग्रहे 'तस्याऽपत्यम्' इत्यणि 'अन्' इति प्रकृतिभावे विभक्तिकार्ये 'राजनः' इति।

**रैवतिकः** (१९४४)—रेवत्याः अपत्यमिति विग्रहे 'रेवत्यादिभ्यष्ठक्' इति ठकि ठस्येकादेशे 'किति चे'त्यादिवृद्धौ भत्वात् 'यस्येति च' इतीकारलोपे विभक्तिकार्ये तत्सिद्धिः।

इति सोत्तरायां प्रश्नावल्यामपत्याधिकारः।

# अथ रक्ताद्यर्थप्रकरणम्

**तेन रक्तं रागात्**—तेन नाम, रागवाचकात्तृतीयान्तात् रक्तमित्यस्मिन्नर्थे अण् स्यादित्यर्थः। **नक्षत्रेण**—नक्षत्रवाचिनस्तृतीयान्तात् समर्थशब्दात् युक्त इत्यर्थे अण् प्रत्ययः स्यात्, योऽसौ युक्तः स कालश्चेद् भवतीत्यर्थः। **दृष्टं साम**—तृतीयान्तात् समर्थाद् दृष्टं साम इत्यर्थे अण् स्याद् यद् दृष्टं साम चेद्भवतीत्यर्थः। **वामदेवाद्**—तृतीयान्तात् समर्थात् वामदेवशब्दाद् दृष्टं सामेत्यर्थे ड्यत्-ड्य-इत्येतौ प्रत्ययौ भवत इत्यर्थः। (एवं सर्वत्र सूत्रे अर्थाः कल्पनीयाः)

**शारावः** (१९३१, ३४)—शरावे उद्धृतः इति विग्रहे शरावशब्दात् 'तत्रोद्धृतममत्रेभ्यः' इत्यणि आदिवृद्धौ भत्वादलोपे विभक्तिकार्ये तत्सिद्धिः।

**पाशुपतम्** (१९२३, ४७)—पशुपतिर्देवताऽस्येति विग्रहे पशुपतिशब्दात् 'साऽस्य देवता' इत्यणि वृद्धौ भत्वादिलोपे विभक्तिकार्ये तत्सिद्धिः।

**पित्र्यम्** (१९३८)—पितरो देवताऽस्येति विग्रहे 'वाय्वृतुपित्रुषसो यत्' इति यति 'रीङ् ऋतः' इति ऋतो रीङि भत्वादीकारलोपे विभक्तिकार्ये तत्सिद्धिः।

**यौवतम्** ( १९३३ )—युवतीनां समूहः इत्यर्थे 'यूनस्तिः' इति तिप्रत्ययनिष्पन्नाद् युवतिशब्दात् 'भिक्षादिभ्योऽण्' इत्यणि आदिवृद्धौ 'भस्याढे तद्धिते' इति पुंवद्भावात्तिप्रत्ययनिवृत्तौ 'अन' इति प्रकृतिभावात् टिलोपाभावे विभक्तिकार्ये **'यौवनम्'** इति। युधातोः शतृप्रत्यये उवङि, 'उगितश्चे'ति ङीपि 'युवती' इति, तस्मात् 'अनुदात्तादेरञ्' इत्यञि आदिवृद्धौ 'भस्याढे' इति पुंवद्भावेन ङीपो निवृत्तौ विभक्तिकार्ये **'यौवतम्'** इति भवति।

**जनता** ( १९४२ )—जनानां समूह इति विग्रहे जनशब्दात् ग्रामजनबन्धुभ्यस्तल्' इति तल्प्रत्यये 'तलन्तं स्त्रियाम्' इति स्त्रीत्वाट्टापि विभक्तिकार्ये तत्सिद्धम्। ( एवं बन्धूनां समूहः 'बन्धुता' ( १९२६ ) इत्यपि बोध्यम् )

**हास्तिकम्** ( १९४५ )—हस्तिनां समूहः इति विग्रहे 'अचित्तहस्तिधेनोष्ठक्' इति ठकि ठस्येक इति ठस्य इकादेशे 'किति च' इत्यादिवृद्धौ टिलोपे विभक्तिकार्ये तत् सिद्धम्। हस्तिनीनां समूहः इत्यर्थे तु 'भस्याढे' इति पुंवद्भावेन सिद्धं बोध्यम्।

**वैयाकरणः** ( १९२८, ३२, ४१, ४९ )—व्याकरणमधीते वेद वेत्यर्थे 'तदधीते तद्वेद' इत्यनेन व्याकरणशब्दादणि भत्वादलोपे 'व्याकरण् अ' इति स्थिते 'न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्' इति यकारात्पूर्वमैजागमे विभक्तिकार्ये तत्सिद्धिः।

**मीमांसकः** ( १९४० )—मीमांसामधीते वेद वेत्यर्थे मीमांसाशब्दात् 'क्रमादिभ्यो वुन्' इति वुनि वोरकादेशे भत्वात् 'यस्येति चे'त्याकारलोपे विभक्तिकार्ये तत्सिद्धिः।

इति सोत्तरायां प्रश्नावल्यां रक्ताद्यर्थप्रकरणम्।

---

# अथ चातुरर्थिकप्रकरणम्

**तदस्मिन्**—'प्रथमान्तादस्मिन्नस्तीत्यर्थे अणादयः प्रत्ययाः स्युः, प्रत्ययान्तेन तन्नाम्नि देशे गम्यमाने' इति सूत्रार्थः।

**औदुम्बरो देशः** ( १९५० )—उदुम्बराः सन्त्यस्मिन् देशे इत्यौदुम्बरो देशः। अत्र उदुम्बरशब्दात् 'तदस्मिन्नस्तीति देशे तन्नाम्नि' इत्यणि आदिवृद्धौ भत्वादलोपे विभक्तिकार्ये तत्सिद्धिः।

**कौशाम्बी** ( १९४७ )—कुशाम्बेन निर्वृत्ता नगरी कौशाम्बी। अत्र कुशाम्ब-

शब्दात् 'तेन निर्वृत्तम्' इत्यणि आदिवृद्धौ भत्वादलोपे अणन्तत्वात् 'टिड्ढाणञ्' इति ङीपि विभक्तिकार्ये तत्सिद्धम् ।

**नड्वलः** ( १९४८ )—नडाः सन्ति यस्मिन् इति विग्रहे 'नडशादाड्ड्वलच्' इति ड्वलचि डित्वाट्टिलोपे विभक्तिकार्ये तत्सिद्धम् । ( एवं शादा ( घासाः ) सन्ति यस्मिन् स शाद्वलः । शिखाऽस्त्यस्मिन् इति शिखावलः ( मयूरः )

इति सोत्तरायां प्रश्नावल्यां चातुरर्थिकप्रकरणम् ।

---

# अथ शैषिकप्रकरणम्

**राष्ट्रियः** ( १९३३,५० )—राष्ट्रे जातः, भवः इत्यादिविग्रहे 'राष्ट्राऽवार-पाराद्घखौ' इति घप्रत्यये घस्य इयादेशो भत्वाद् 'यस्येति च' इत्यकारलोपे विभक्तिकार्ये तत्सिद्धिः ।

**पारावारीणः** ( १९२९ )—'राष्ट्राऽवार-पाराद्घखौ' इति सूत्रस्थ 'अवारपा-राद्विगृहीतादपि, विपरीताच्चेति वक्तव्यम्' इति वार्तिकस्याऽयमर्थः—विगृहीतात् = पृथग्भूतात्, अवारशब्दात् पारशब्दाच्च, च = पुनः विपरीतात् = पारावारशब्दादपि खप्रत्ययो वक्तव्यः । ततश्च अवारे जातः 'अवारीणः' पारे जातः 'पारीणः' पारावारे जातः 'पारावारीणः' इति रूपत्रयं सिद्धं भवति । अत्र खस्य ईनादेशः भत्वादलोपः नस्य णत्वमिति विशेषः । 'अवारपारीणः' इति तु चतुर्थं रूपं बोध्यम् ।

**ग्रामीणः** ( १९२१ )—ग्रामे जातादिरिति विग्रहे ग्रामशब्दात् 'ग्रामाद्यखञौ' इति खञ् खस्य ईनादेशे भत्वादलोपे णत्वे विभक्तिकार्ये तत् सिद्धम् ।

**शालीयः** ( १९२३,२७,४० )—शालायां भवः इति विग्रहे 'वृद्धिर्यस्याचा-मादिस्तद् वृद्धम्' इति शालाशब्दस्य वृद्धसंज्ञायाम् 'वृद्धाच्छः' इति छप्रत्यये छस्य ईयादेशे भत्वादाकारस्य लोपे विभक्तिकार्ये 'शालीयः' इति ।

**युष्मदीयः** ( १९२१ ) युवयोर्युष्माकं वाऽयमिति विग्रहे 'युष्मदस्मदोरन्य-तरस्यां खञ् च' इति युष्मच्छब्दात् छप्रत्यये छस्य ईयादेशे विभक्तिकार्ये तत्सिद्धिः ।

**आस्माकीनः** ( आवयोरस्माकं वाऽयमिति विग्रहे 'युष्मदस्मदोरन्यतरस्यां खञ् च इति अस्मच्छब्दात् खञि खस्य ईनादेशे 'तस्मिन्नणि च युष्माकाऽस्माकौ' इत्यनेन अस्माकादेशे आदिवृद्धौ भत्वादलोपे विभक्तिकार्ये तत्सिद्धिः ।

**तावकीनः** ( १९२७ )—तव अयमिति विग्रहे 'युस्मदस्मदोरन्यतरस्यां

खञ्' इति खञि 'तवकममकावेकवचने' इति युष्मद्स्थाने तवकादेशे खस्य ईनादेशे आदिवृद्धौ भत्वादलोपे विभक्तिकार्ये तत्सिद्धिः।

त्वदीयः (१९४७)—तव अयमिति विग्रहे युष्मच्छब्दात् 'युष्मदस्मदोः' इति चकाराच्छप्रत्यये छस्य ईयादेशे 'प्रत्ययोत्तरपदयोश्च' इति युष्मदो मपर्यन्तस्य त्वादेशे 'त्व अद् ईय' इति जाते 'अतो गुणे' इति पररूपे विभक्तिकार्ये तत्सिद्धिः।

आधिदैविकम् (१९४९) देवेष्वित्यधिदेवम्, अधिदेवे भवमाधिदैविकम्। अधिदेवशब्दात् 'अध्यात्मादेष्ठञिष्यते' इति वार्तिकेन ठञि ठस्येकादेशे 'अनुशतिकादीनां च' इत्युभयपदवृद्धौ भत्वादलोपे विभक्तिकार्ये तत्सिद्धिः।

पारलौकिकम् (१९३७)—परलोके भवं पारलौकिकम्। 'अध्यात्मादेष्ठञिष्यते' इति ठस्येकादेशे उभयपदवृद्धौ भत्वादलोपे विभक्तिकार्ये तत्सिद्धिः।

पैतामहकः (१९२६)—पितामहादागतः इति विग्रहे पितामहशब्दात् 'विद्यायोनिसम्बन्धेभ्यो वुञ्' इति वुञि वुञोऽकादेशे आदिवृद्धौ भत्वादलोपे विभक्तिकार्ये तत्सिद्धिः। इति सोत्तरायां प्रश्नावल्यां शैषिकप्रकरणम्।

---

# अथ विकारार्थप्रकरणम्

आश्मनम् (१९४०)—कल्माषांघ्रिर्नाम कश्चिद् राजा, तत्पत्न्यां वशिष्ठेनोत्पादितः 'अश्मकः' इति शास्त्रे प्रसिद्धः। तस्मात् अश्मन् शब्दात् स्वार्थे कप्रत्ययः। तदभावे अश्मेत्यपि नाम। तस्य विकारो अवयवो वेत्यर्थे 'अश्मन्' शब्दात् 'मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः' इति मयटि न लोपे विभक्तिकार्ये 'अश्ममयम्' इति। मयडभावे 'तस्य विकारः' इत्यणि 'अन्' इति प्रकृतिभावाट्टिलोपाऽभावे आदिवृद्धौ विभक्तिकार्ये 'आश्मनम्' इति। नच विकारार्थकत्वे 'अश्मनो विकारे टिलोपो वक्तव्यः' इति वार्तिकेन टिलोपः कुतोनेति वाच्यम्, पाषाणवाचकत्वेन प्रसिद्धस्याश्मन्शब्दस्यैव तत्र ग्रहणात्। (पाषाणवाचकाद् अश्मन् शब्दात्तु विकारार्थे अणि टिलोपे आदिवृद्धौ विभक्तिकार्ये 'आश्मः' इति भवति)।

गोमयम् (१९३२)—गोः पुरीषम्-गोमयम्। गोशब्दात् 'गोश्च पुरीषे' इति मयटि विभक्तिकार्ये तत्सिद्धिः।

इति सोत्तरायां प्रश्नावल्यां विकारार्थप्रकरणम्।

# अथ ठगधिकारप्रकरणम्

**मारीचिकम्** ( १९२० )—मरीचेन संस्कृतं मारीचिकम्। मरीचशब्दात् 'संस्कृतम्' इति ठकि ठस्य इकादेशे 'किति च' इत्यादिवृद्धौ भत्वादलोपे विभक्तिकार्ये तत् सिद्धम्।

**धार्मिकः** ( १९५० )—धर्मं चरति 'धार्मिकः'। धर्मशब्दात् 'धर्मं चरति' इति ठकि ठस्येकादेशे 'किति चे' त्यादिवृद्धौ भत्वादलोपे विभक्तिकार्ये तत्सिद्धम्।

**धानुष्कः** ( १९२० )—धनुः प्रहरणमस्य धानुष्कः। धनुष्शब्दात् प्रहरणम्' इति ठकि 'इसुसुक्तान्तात्कः' इति ठस्य कादेशे कित्वादादिवृद्धौ विभक्तिकार्ये तत्सिद्धिः।

**नैकटिकः** ( १९४० )—निकटे वसतीति विग्रहे 'निकटे वसति' इति सूत्रेण ठकि ठस्य इकादेशे 'किति चे'ति वृद्धौ भत्वादलोपे विभक्तिकार्ये तत्सिद्धिः। यस्य शास्त्रतो निकटवासस्तत्राऽयं विधिः। आरण्यकेन भिक्षुणा ग्रामात् क्रोशे वस्तव्यमिति शास्त्रम्।

इति सोत्तरायां प्रश्नावल्यां ठगधिकारप्रकरणम्।

# अथ यदधिकारप्रकरणम्

**युग्यः** ( १९२० )—युगं वहतीति विग्रहे 'तद्वहतिरथयुगप्रासङ्गम्' इति युगशब्दात् यत्प्रत्यये भत्वादलोपे विभक्तिकार्ये तत् सिद्धम्।

**धौरेयः** ( १९२६ ) धुरं वहतीति विग्रहे धुर्शब्दात् 'धुरो यड्ढकौ' इति ढकि 'किति चे' त्यादिवृद्धौ ढस्य एयादेशे विभक्तिकार्ये तत्सिद्धम्।

**नाव्यम्** ( १९५० )—नावा तार्यमिति विग्रहे नौशब्दात् 'नौवयोधर्म–' इत्यादिसूत्रेण यत्प्रत्यये 'वान्तो यि प्रत्यये' इत्यावादेशे विभक्तिकार्ये उक्तं रूपं सिद्धम्।

**शरण्यः** ( १९४८ ) शरणे साधुरिति विग्रहे शरणशब्दात् 'तत्र साधुः' इति यत्प्रत्यये भत्वादलोपे विभक्तिकार्ये तत्सिद्धिः।

इति सोत्तरायां प्रश्नावल्यां यदधिकारप्रकरणम्।

# अथ छयतोरधिकारप्रकरणम्

**नभ्यम्**—नाभये हितमिति विग्रहे नाभिशब्दात् 'उगवादिभ्यो यत्' इति यत्प्रत्यये नाभेर्नभादेशे भत्वात् 'यस्येति च' इतीकारलोपे विभक्तिकार्ये नभ्यमञ्जनमिति।

**मातृभोगीणः** ( १९४० )—मातुर्भोगः = शरीरं तस्मै हित मिति विग्रहे मातृभोगशब्दात् 'आत्मन्विश्वजनभोगोत्तरपदात् खः' इति खप्रत्यये खस्य ईनादेशे भत्वादलोपे 'कुमति च' इति णत्वेविभक्तिकार्ये तत्सिद्धिः।

इति सोत्तरायां प्रश्नावल्यां छयतोरधिकारः।

---

# अथ ठञधिकारप्रकरणम्

**सार्वभौमः** ( १९४९ )—सर्वभूमेरीश्वरः इति विग्रहे सर्वभूमिशब्दात् 'तत्रेश्वरः' इति अण्प्रत्यये 'अनुशतकादीनां च' इत्युभयपदवृद्धौ भत्वादिलोपे विभक्तिकार्ये तत्सिद्धिः।

इति सोत्तरायां प्रश्नावल्यां ठञधिकारप्रकरणम्।

---

# अथ त्वतलोऽधिकारप्रकरणम्

**गोत्वम्** ( १९४४ ) गोर्भावो गोत्वम्। अत्र गोशब्दात् 'तस्य भावः त्वतलौ' इति त्वप्रत्यये विभक्तिकार्ये तत्सिद्धिः।

**स्त्रैणम्**—स्त्रिया भावः 'स्त्रैणम्'। अत्र 'तस्य भावस्त्वतलौ' इति प्राप्तौ तं प्रबाध्य 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' इति नञि अनुबन्धलोपे आदिवृद्धौ णत्वे विभक्तिकार्ये तत्सिद्धिः।

**प्रथिमा** ( १९३७ )—पृथोर्भावः 'प्रथिमा'। पृथुशब्दात् 'पृथ्वादिभ्यः इमनिज्वा' इति विकल्पेन इमनिच्प्रत्यये चकारस्येत्संज्ञायां लोपे च विहिते इकारस्योच्चारणार्थत्वेन 'पृथु इमन्' इति स्थिते 'र ऋतो हलादेर्लघोः' इति ऋकारस्य रकारादेशे उकारस्य गुणं बाधित्वा 'टेः' इति टिलोपे प्रातिपदिकसंज्ञायां सौ सर्वनामस्थाने चासम्बुद्धौ इति दीर्घे सुलोपे नलोपे 'प्रथिमा' इति इमनिजभावे 'इगन्ताच्च लघुपूर्वात्' इत्यणि आदिवृद्धौ रपरत्वे 'ओर्गुणः' इति गुणेऽवादेशे विभक्तिकार्ये 'पार्थवम्' इति। ( त्वप्रत्यये 'पृथुत्वम्' इति। तल्प्रत्यये 'पृथुता' इति।

**ज्ञातेयम्** ( १९२६ )—ज्ञातेर्भावः कर्मवेति विग्रहे ज्ञातिशब्दात् 'कपिज्ञात्योर्ढक्' इति ढकि अनुबन्धलोपे ढस्य एयादेशे भत्वादिलोपे विभक्तिकार्ये तत्सिद्धिः।

**सैनापत्यम्**—सेनापतेर्भावः कर्म वेति विग्रहे 'पत्यन्तपुरोहितादिभ्यो यक्' इति यकि अनुबन्धलोपे 'किति च' इत्यादिवृद्धौ भत्वात् 'यस्येति च' इतीकारलोपे विभक्तिकार्ये तत्सिद्धिः।

इति सोत्तरायां प्रश्नावल्यां त्वतलोरधिकारप्रकरणम्।

# अथ भवनाद्यर्थकप्रकरणम्

**पण्डितः**—सदसद्विवेकिनी बुद्धिः = पण्डा, पण्डा = बुद्धिः, सञ्जाताऽस्येति पण्डितः। पण्डाशब्दात् प्रथमान्तात् 'तदस्य सञ्जातं तारकादिभ्यः इतच्' इति इतचि अनुबन्धलोपे भत्वादलोपे विभक्तिकार्ये तत्सिद्धिः।

**इयान्**—इदं परिमाणमस्येति विग्रहे 'किमिदम्भ्यां वो घः' इति वतुपि वस्य घत्वे च विहिते 'इदंकिमोरीश्की' इति इदम ईशादेशे अनुबन्धलोपे 'ई घत्' इति दशायां घस्य इयादेशे भत्वात् 'यस्येति च' इतीकारलोपे 'इयत्' इति। तस्मात् सौ उगित्वान्नुमि उपधादीर्घे तकारस्य संयोगान्तलोपे 'हल्ङ्याब्भ्यः' इति सुलोपे 'इयान्' इति।

**विंशः** ( १९२६ )—विंशतेः पूरणः इति विग्रहे विंशतिशब्दात् 'तस्य पूरणे डट्' इति डटि अनुबन्धलोपे भसंज्ञायां 'ति विंशतेर्डिति' इति तिलोपे 'विंश अ' इति स्थिते 'असिद्धवदत्राऽभात्' इति तिलोपस्याऽसिद्धत्वाद् 'यस्येति चे'ति लोपस्याऽप्राप्त्या 'अतो गुणे' इति पररूपे विभक्तिकार्ये 'विंशः' इति।

**तृतीयः** ( १९२८,५२ ) त्रयाणां पूरणः इति विग्रहे त्रिशब्दात् 'तस्य पूरणे डट्' इति सूत्रं प्रबाध्य 'त्रेः सम्प्रसारणं च' इति तीयप्रत्यये सम्प्रसारणे च विहिते विभक्तिकार्ये तत्सिद्धिः।

**श्रोत्रियः** ( १९३४ )—छन्दोऽधीते इति विग्रहे 'श्रोत्रियंश्छन्दोऽधीते' इति निपातनात् 'छन्दः' शब्दात् घन्प्रत्यये छन्दःशब्दस्य श्रोत्रादेशे च विहिते घस्य इयादेशे भत्वादलोपे विभक्तिकार्ये तत्सिद्धिः।

**कृतपूर्वी**—कृतं पूर्वमनेनेति विग्रहे 'सुप्सुपे'ति समासनिष्पन्नात् कृतपूर्वशब्दात् 'सपूर्वाच्च' इतीनि प्रत्यये भत्वादलोपे प्रातिपदिकात् सौ दीर्घे सुलोपे नलोपे 'कृतपूर्वी' इति। इति सोत्तरायां प्रश्नावल्यां भवनार्थकप्रकरणम्।

# अथ मत्वर्थीयप्रकरणम्

**गोमान्** ( १९२९ )—गावोऽस्यास्मिन् वा सन्तीति विग्रहे गोशब्दात् 'तदस्यास्त्यस्मिन्निति मतुप्' इति मतुपि अनुबन्धलोपे प्रातिपदिकात् सौ उगित्वान्नुमि 'अत्वसन्तस्ये'ति दीर्घे सुलोपे संयोगान्तलोपे तत्सिद्धिः ।

**दण्डी** ( १९४२ )—दण्डोऽस्यास्तीति विग्रहे दण्डशब्दात् 'अत इनिठनौ' इति इनि प्रत्यये भत्वात् 'यस्येति चे' त्यकारलोपे प्रातिपदिकात् सौ दीर्घे सुलोपे नलोपे 'दण्डी' इति ।

**मेधावी** ( १९२५, २९, ३५ )—मेधा अस्यास्तीति विग्रहे मेधाशब्दात् 'अस्मायामेधास्रजो विनिः' इति विनिप्रत्यये प्रातिपदिकत्वात् सौ 'सौ च' इति दीर्घे सुलोपे नलोपे तत्सिद्धिः । एवं–यशः अस्यास्तीति 'यशस्वी' अन्यतरस्यामित्यनुवृत्तेः पक्षे मतुप् 'यशस्वान्' इति । अत्र रुत्वन्तु न, 'तसौ मत्वर्थे' इति भत्वेन पदत्वबाधात् ।

**स्रग्वी**—( १९३० )—स्रगस्यास्तीति विग्रहे स्रज्शब्दात् 'अस्माये'ति विनिप्रत्यये प्रातिपदिकात् सौ 'चोः कुः' इति जस्य कुत्वे 'सौ च' इति दीर्घे सुलोपे नलोपे तत्सिद्धिः ।

**शुभंयुः** ( १९३६ )—'शुभम्' इति मान्तमव्ययं शुभे वर्तते । तस्मात् शुभमस्यास्तीति विग्रहे 'अहंशुभमोर्युस्' इति युसि 'सिति च' इति पदत्वात् मस्यानुस्वारे प्रातिपादिकात् सौ सोर्लोपे सस्य रुत्वे विसर्गे 'शुभंयुः' इति । परसवर्णे तु 'शुभयँ्युः' इति भवति ।

इति सोत्तरायां प्रश्नावल्यां मत्वर्थीयप्रकरणम्



# अथ प्राग्दिशीयप्रकरणम्

**कुतः** ( १९३३ )—कस्मादिति कुतः । पञ्चम्यन्तात् किम् शब्दात् 'पञ्चम्यास्तसिल्' इति तसिलप्रत्यये तद्धितान्तत्वात् प्रातिपदिकत्वेन सुब्लुकि 'कुतिहोः' इति किमः 'कु' इत्यादेशे कृते स्वरादौ पाठेन तसिलन्तस्याऽव्ययत्वेन तद्धितान्तत्वादागतस्य सुपो लुकि सस्य रुत्वे विसर्गे 'कुतः' इति सिद्धम् । पक्षे कस्मादिति ।

**अतः** ( १९३२ )—पञ्चम्यन्तादेतच्छब्दात् 'पञ्चम्यास्तसिल्' इति तसिलि सुब्लुकि 'एतदोऽन्' इति एतदोऽनादेशे पदत्वान्नलोपे प्रातिपदिकात् सौ अव्ययत्वात् सुब्लुकि सस्य रुत्वे विसर्गे 'अतः' इति । पक्षे एतस्मादिति ।

**अमुतः** ( १९३५ )—पञ्चम्यन्ताद् 'अदस्' शब्दात् 'पञ्चम्यास्तसिल्' इति तसिलि सुब्लुकि अत्वे पररूपे उत्वे मत्वे प्रातिपदिकात् सौ अव्ययत्वात् सुब्लुकि सस्य रुत्वे विसर्गे 'अमुतः' इति ।

**कदा**—कस्मिन् काले कदा । सप्तम्यन्तात् किम् शब्दात् 'सर्वैकान्य-' इति दाप्रत्यये सुब्लुकि 'प्राग्दिशो विभक्तिः' इति विभक्तिसंज्ञायां 'किमः कः' इति कादेशे विभक्तिकार्ये तत्सिद्धिः ।

**तर्हि** ( १९३३ )—सप्तम्यन्तात् 'तत्' शब्दात् 'अनद्यतने र्हिलन्यतरस्याम्' इति र्हिलप्रत्यये अत्वे पररूपे प्रातिपदिकात् सौ अव्ययत्वात् सुब्लुकि 'तर्हि' इति । पक्षे दाप्रत्यये सति 'तदा' इति भवति ।

इति सोत्तरायां प्रश्नावल्यां प्राग्दिशीयप्रकरणम् ।



# अथ प्रागिवीयप्रकरणम्

**किन्तमाम्**—अयमेषामतिशयेन किमिति विग्रहे किम्शब्दात् 'अतिशायने तमबिष्ठनौ' इति तमपि 'तरप्तमपौ घः' इति तस्य घिसंज्ञायां 'किमेत्तिङव्ययघादाम्व-द्रव्यप्रकर्षे' इति आमुप्रत्यये भत्वात् 'यस्येति च' इति मकारोत्तराकारस्य लोपे स्वरादित्वादव्ययसंज्ञायां विभक्तेर्लुकि तत्सिद्धिः ।

**लघीयान्**—अयमेषामतिशयेन लघुरिति विग्रहे 'द्विवचनविभज्योपपदे तरबीय-सुनौ' इति ईयसुनि अनुबन्धलोपे भसंज्ञायां 'टेः' इति घकारोत्तरवर्त्युकारस्य लोपे 'लघीयस्' शब्दात् प्रातिपदिकत्वेन सौ 'उगिदचाम्' इति नुमि 'सान्तमहतः' इति दीर्घे सुलोपे संयोगान्तलोपे तत्सिद्धिः ।

**पटीयान्** ( १९४६ )—उदीच्यः प्राच्येभ्यः पटुतरः इति पटीयान् । अत्र पटुशब्दात् 'द्विवचनविभज्योपपदे' इतीयसुनि अनुबन्धलोपे भसंज्ञायां 'टेः' इति टकारोत्तरवर्त्युकारस्य लोपे 'पटीयस्' शब्दात् प्रातिपदिकत्वेन सौ उगित्वान्नुमि 'सान्तमहतः' इति दीर्घे सुलोपे संयोगान्तलोपे तत्सिद्धिः ।

**श्रेष्ठः**—अयमेषामतिशयेन प्रशस्यः इति विग्रहे प्रशस्य शब्दात् 'अतिशायने तमबिष्ठनौ' इति इष्ठनि प्रत्यये अनुबन्धलोपे 'प्रशस्यस्य श्रः' इति श्रादेशे 'प्रकृत्यैकाच्' इति प्रकृतिभावे 'टेः' इति टिलोपाभावे गुणे विभक्तिकार्ये तत्सिद्धिः ।

**श्रेयान्** ( १६२६ )—अयमयोरतिशयेन प्रशस्यः इति विग्रहे प्रशस्यशब्दात् 'द्विवचनविभज्योपपदे' इतीयसुनि अनुबन्धलोपे 'प्रशस्यस्य श्रः' इति श्रादेशे 'प्रकृत्यैकाच्' इति प्रकृतिभावेन टिलोपाभावे गुणे प्रातिपदिकात् सौ उगित्वान्नुमि 'सान्तमहतः' इति दीर्घे सुलोपे तत्सिद्धिः ।

**'ज्य च'** ( १९४८, ५० ) 'ज्य' इति लुप्तप्रथमान्तम्, 'च' इत्यव्ययम् । 'प्रशस्यस्य ज्यादेशः स्यादिष्ठेयसोः' इति सूत्रार्थः । उदाहरणन्तु 'ज्येष्ठः' 'ज्यायान्' इति बोध्यम् ।

**ज्येष्ठः** ( १९२६ ) अयमेषामतिशयेन प्रशस्यः इति ज्येष्ठः । इष्ठनि कृते 'ज्य च' इति ज्यादेशे प्रकृतिभावाट्टिलोपाऽभावे गुणे विभक्तिकार्ये तत्सिद्धिः ।

**ज्यायान्** ( १६४१,४८,५० )—द्वयोर्मध्येऽतिशयेन प्रशस्यः इति विग्रहे प्रशस्यशब्दात् 'द्विवचनविभज्योपपदे तरबीयसुनौ' इतीयसुनि अनुबन्धलोपे 'ज्य च' इति ज्यादेशे 'प्रकृत्यैकाच्' इति प्रकृतिभावाट्टिलोपाभावे 'ज्यादादीयसः' इत्यनेन 'आदेः परस्ये'ति सहकारात् प्रत्ययस्यादेरीकारस्याऽऽकारादेशे सवर्णदीर्घे 'ज्यायस्' शब्दात् प्रातिपदिकसंज्ञायां सौ उगित्वान्नुमि अनुबन्धलोपे उपधादीर्घे सुलोपे संयोगान्तलोपे तत्सिद्धिः ।

**भूयिष्ठः** ( १९३७,४५ )—'अतिशयेन बहु' इति विग्रहे 'अतिशायने तमबिष्ठनौ' इतीष्ठनि अनुबन्धलोपे 'इष्ठस्य यिट् च' इति इष्ठनः इकारलोपे यिटि च कृते टकारस्येत्संज्ञायां लोपे 'बहोर्लोपो भू च' इति बहोः स्थाने 'भू' इत्यादेशे विभक्तिकार्ये 'भूयिष्ठः' इति ।

इति सोत्तरायां प्रश्नावल्यां प्रागिवीयप्रकरणम् ।



# अथ स्वार्थिकप्रकरणम्

**अपूपमयं पर्व** ( १९२६ )—पर्वणि प्रचुरा अपूपाः कार्याः इत्याद्युच्यमानाऽपूपाधिकरणं पर्वेत्यर्थः । अत्र अपूपशब्दाद् अधिकरणेऽर्थे 'तत्प्रकृतवचने मयट्' इति मयटि अनुबन्धलोपे विभक्तिकार्ये तत्सिद्धिः । भावे तु 'प्रचुरोऽपूपः' अपूपमयम् इति विग्रहो बोध्यः ।

बहुशः ( १९४ )—बहूनि ( बहुभ्यो वा ) ददातीति विग्रहे बहुशब्दात् 'बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्' इति स्वार्थे शसि प्रत्यये 'बहुशस्' इति, तस्मात् सौ अव्ययत्वात् सुब्लुकि सकारस्य रुत्वे विसर्गे 'बहुशः' इति ।

गङ्गीस्यात्—अगङ्गा गङ्गात्वेन सम्पद्यमाना स्यादित्यर्थः । गङ्गाशब्दात् 'कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः' इति सूत्रेण 'अभूततद्भाव इति वक्तव्यम्' इति वार्तिकसहकारात् अभूततद्भावे च्विप्रत्यये इकारस्योच्चारणार्थत्वेन दर्शनाऽभावे चकारस्येत्संज्ञायां लोपे च कृते 'अस्य च्वौ' इत्यनेन आकारस्य ईत्वे 'वेरपृक्तस्य' इति वलोपे गङ्गीत्यव्ययम् , तस्मात् सौ सुब्लुकि तत्सिद्धम् ।

पटपटा करोति ( १९२६,३८ )—'डाचि विवक्षिते द्वे बहुलम्' इति वार्तिकेन डाचः प्रागेव 'पटत्' शब्दस्य द्वित्वे 'पटत् पटत्' इति दशायाम् 'अव्यक्तानुकरणाद्—' इति डाचि अनुबन्धलोपे 'तस्य परमाम्रेडितम्' इति परस्य 'पटत्' शब्दस्याम्रेडितसंज्ञायां 'नित्यमाम्रेडिते डाचीति वक्तव्यम्' इति वार्तिकेन पूर्वपटत्-सम्बन्धिनस्तकारस्य परपटत्-सम्बन्धिनः पकारस्य चोभयोः पररूपे डाच्प्रत्यये परे भसंज्ञायां 'टेः' इत्यनेन टिलोपे अव्ययत्वात् सुब्लुकि उक्तं रूपं सिद्धम् ।

इति पण्डित श्री रामचन्द्रझा व्याकरणाचार्यविरचितायां सोत्तरायां प्रश्नावल्यां तद्धितप्रकरणं समाप्तम् ।

# अथ स्त्रीप्रत्ययप्रकरणम्

भवन्ती—भूधातोर्लटः शतरि शपि ऊकारस्य गुणेऽवादेशे 'भवत्' शब्दात् स्त्रीत्वविवक्षायाम् 'उगितश्च' इति ङीपि 'शप्श्यनोर्नित्यम्' इति नुमि विभक्तिकार्ये 'भवन्ती' इति । ( अनुबन्धलोपस्तु यथास्थले सर्वत्र कर्तव्यः ) ।

पचन्ती—पचेर्लटः शतरि शपि पररूपे 'पचत्' शब्दात् स्त्रीत्वे 'उगितश्चे'ति ङीपि 'शप्श्यनोर्नित्यम्' इति नुमि विभक्तिकार्ये तत्सिद्धिः ।

देवी ( १९४४ )—'टिड्ढाणञ्' इति सूत्रे टित्वन्तु प्रातिपदिकस्य क्वचित् प्रत्ययकृतं, क्वचित् प्रकृतिकृतं भवति । तत्राद्यस्योदाहरणं 'कुरुचरीति'—कुरुषु चरतीत्यधिकरणे उपपदे 'चरेष्टः' इति कर्तरि टप्रत्यये उपपदसमासे सुब्लुकि 'कुरुचर' इति ' तस्मात् स्त्रीत्वविवक्षायां टित्वात् ङीपि भत्वाद् 'यस्येति च' इत्यलोपे विभक्तिकार्ये 'कुरुचरी'ति । द्वितीयोस्योदाहणं 'नदट् नदी, देवट् देवी, इति ।

पचादिषु नदट्–देवट् इत्यनयोः टितः पाठात् स्वत एव टित्वमिति ताभ्यां ङीपि भत्वादलोपे विभक्तिकार्ये 'नदी' 'देवी' इत्युभयं सिद्धं भवति। तृतीयोदाहरणन्तु घेटष्टित्वात् 'स्तनन्धयी' इति कृदन्ते मृग्यम्।

गार्गी (१९२६) गर्गस्याऽपत्यं स्त्रीति विग्रहे 'गर्गादिभ्यो यञ्' इति गर्ग-शब्दात् यञि आदिवृद्धौ भत्वादलोपे 'गार्ग्य' इति। तस्मात् स्त्रीत्वविवक्षायां 'यञश्च' इति ङीपि भत्वादलोपे 'हलस्तद्धितस्य' इति यलोपे विभक्त्यादिकार्ये तत्सिद्धिः।

गार्ग्यायणी—यञन्तात् गार्ग्यशब्दात् 'प्राचां ष्फ तद्धित' इति ष्फप्रत्यये 'आयनेयी'ति फस्यायनादेशे भत्वादलोपे णत्वे 'गार्ग्यायण' इति। तस्मात् स्त्रीत्व-विवक्षायां 'षिद्गौरादिभ्यश्च' इति ङीषि भत्वादलोपे विभक्त्यादिकार्ये तत्सिद्धिः।

नर्तकी १९५१)—नृत्धातोः 'शिल्पिनि ष्वुन्' इति ष्वुन्प्रत्यये 'युवोरनाकौ' इति वोरकादेशे लघूपधगुणे रपरत्वे 'नर्तक' इति। तस्मात् स्त्रीत्वे 'षिद्गौरा-दिभ्यश्च' इति ङीषि भत्वादलोपे विभक्त्यादिकार्ये तत्सिद्धिः।

गौरी (१९५२)—गौरादिगणपठितात् गौरशब्दात् स्त्रीत्वविवक्षायां 'षिद्-गौरादिभ्यश्च' इति ङीषि भत्वादलोपे विभक्तिकार्ये 'गौरी' इति। श्वेतेत्यर्थः। 'उमा कात्यायनी गौरी' इत्यमरः। 'दशवर्षा भवेद्गौरी' इति स्मृतिः।

वयसि प्रथमे—प्राणिनां कालकृताऽवस्थाविशेषो वयः। तच्च त्रिविधमित्येके— 'पिता रक्षति कौमारे भर्ता रक्षिति यौवने। पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्य-मर्हसि॥' इति दर्शनात्। अत्र प्राञ्चः—'कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधिः। कैशोरमापञ्चदशाद्यौवनं तु ततः परम्॥' इति। अपरे तु—'आद्ये वयसि नाधीतं द्वितीये नार्जितं धनम्। तृतीये न तपस्तप्तं चतुर्थे किं करिष्यति॥" इति दर्शनाद् वयांसि चत्वारीत्याहुः।

कुमारी (१९२९,२०,४१,४७,४९)—बाल्यवाचकात् कुमारशब्दात् स्त्रीत्ववि-वक्षायां 'वयसि प्रथमे' इति ङीपि अनुबन्धलोपे भसंज्ञायां 'यस्येति च' इत्यलोपे प्रातिपदिकत्वात् सौ 'हल्ङ्याब्भ्यः' इति सुलोपे तत्सिद्धिः।

त्रिलोकी—त्रयाणां लोकानां समाहारः इति विग्रहे 'तद्धितार्थ' इति समासे 'संख्यापूर्वो द्विगुः।' इति द्विगुसंज्ञायाम् 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इति स्त्रीत्वात् 'द्विगोः' इति ङीपि भत्वादलोपे विभक्त्यादिकार्ये तत्सिद्धिः।

**एनी** ( १९३३,५० )—एतशब्दः श्वेतपर्यायः, तस्मात् स्त्रीत्वविवक्षायां 'वर्णादनुदात्तात्तोपधात्तो नः', इति ङीपि तकारस्य नकारे च कृते भत्वाद् 'यस्येति च' इत्यलोपे विभक्तिकार्ये 'एनी' इति । पक्षे अदन्तत्वाट्टापि 'एता' इत्येव । ङीवभावे नत्वमपि न भवति, ङीपा सन्नियोगशिष्टत्वादिति तत्वविदः ।

**'हरित' शब्दस्य स्त्रियाम्** ( १९४६ ) 'वर्णादनुदात्तात्तोपधात्तो नः' इति ङीपि तस्य नत्वे च कृते णत्वे भत्वादलोपे विभक्तिकार्ये 'रोहिणी' 'रोहिता' इति सिद्धं भवति ।

**मृद्वी** ( १९४८ )—मृदुशब्दात् स्त्रीत्वविवक्षायां 'वोतो गुणवचनात्' इति ङीपि यणि विभक्तिकार्ये 'मृद्वी' इति । पक्षे 'मृदुः' इति । अत्र सूत्रे गुणशब्देन 'सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते । आधेयश्चाऽक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥' इति गृह्यते । सत्त्वं द्रव्यं समवायिकारणम्, तत्रैव निविशते समवैति यः स गुण इत्यस्य भाष्याशयः । द्रव्यमात्रसमवेत इति यावत् ।

**रात्री**—राधातोः 'राशादिभ्यां त्रिप्' इत्युणादिसूत्रेण त्रिपि, 'कृतो य इकारस्तदन्तात् प्रातिपदिकात् ङीष् वा स्यात्' इत्यर्थक 'कृदिकारादक्तिनः' इति बह्वाद्यन्तर्गणसूत्रेण ङीषि सवर्णदीर्घे विभक्तिकार्ये 'रात्री' इति । पक्षे 'रात्रिः' इत्यपि भवति ।

**शकटी** ( १२३८ ) अव्युत्पन्नप्रातिपदिकात् शकटिशब्दात् स्त्रीत्वविवक्षायां 'सर्वतोऽक्तिन्नर्थादित्येके' इति वार्तिकेन ङीषि अनुबन्धलोपे भत्वात् 'यस्येति च' इतीकारलोपे विभक्तिकार्ये तत्सिद्धिः । पक्षे 'शकटिः' इति ।

**गोपी** ( १९२६, ४२ )—'गोपस्य स्त्री' इति विग्रहे 'पुंयोगादाख्यायाम्' इति ङीषि अनुबन्धलोपे भसंज्ञायां 'यस्येति च' इत्यकारलोपे प्रातिपदिकात् सौ 'हल्ङ्याब्भ्यः' इति सुलोपे 'गोपी' इति जातम् ।

**अश्वपालिका** ( १९२१ )—अश्वं पालयतीति अश्वपालः, अश्वपाल एव अश्वपालकः, तस्य स्त्रीति विग्रहे पुंयोगे ङीषि प्राप्ते 'पालकान्ताच्च' इति निषेधे अकारान्तत्वाट्टापि 'प्रत्ययस्थात्' इति इत्वे विभक्तिकार्ये तत्सिद्धम् ।

**सर्विका**—( ङ्यन्तादाबन्तात्तद्धितोत्पत्तिर्यथा स्यात् ङ्याब्भ्यां प्राङ् मा भूत्' इति नियमस्य जागरूकत्वात् ) सर्वशब्दात् स्त्रीत्वविवक्षायां टापि सवर्णदीर्घे 'सर्वा' इति, ततः एकादेशस्य पूर्वान्तत्वेन ग्रहणात् 'अव्ययसर्वनाम्नाम्—' इति टेः प्रागकचि

ककारादकारस्योच्चारणार्थत्वेन दर्शनाऽभावे चकारस्य इत्संज्ञालोपयोः 'सर्वका' इति जाते 'प्रत्ययस्थात्–' इति ककारात् पूर्वस्य अत इत्वे विभक्तिकार्ये 'सर्विका' इति।

सूर्यशब्दस्य स्त्रियां ( १९२६, ४५ )—सूर्यस्य स्त्री देवता इति विग्रहे सूर्य शब्दात् 'सूर्याद्देवतायां चाब्वाच्यः' इति चापि अनुबन्धलोपे सवर्णदीर्घे विभक्तिकार्ये 'सूर्या' इति । सूर्यस्य स्त्री मानुषीति विग्रहे तु 'पुंयोगादाख्यायाम्' इति ङीषि भत्वा-दलोपे 'सूर्यागस्त्ययोश्छे च ङ्यां च' इति यलोपे विभक्तिकार्ये 'सुरी' इति ।

**इन्द्राणी** ( ४९३७, ४९, ५२ )—इन्द्रस्य स्त्रीति विग्रहे पुंयोगलक्षणे ङीषि सिद्धेऽपि 'इन्द्रवरुण–' इत्यादिसूत्रेण ङीष्सन्नियोगेन आनुगागमे च जाते 'उका-रस्योच्चारणार्थत्वेन दर्शनाऽभावे ककारस्येत्संज्ञायां लोपे च कृते सवर्णदीर्घे णत्वे विभक्तिकार्ये तत्सिद्धम् ।

**मृडानी** ( १९४४ )—मृडस्य स्त्रीति विग्रहे पुंयोगलक्षणे ङीषि 'इन्द्रवरुण' इति आनुगागमे च कृते अनुबन्धलोपे सवर्णदीर्घे विभक्तिकार्ये तत्सिद्धम् ।

**हिमानी** ( १९२४ )—महद्धिममिति विग्रहे हिमशब्दात् 'हिमारण्ययोर्म-हत्वे' इति वार्तिकेन ङीषि आनुगागमे च जाते अनुबन्धलोपे सवर्णदीर्घे विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**अरण्यानी** ( १९२७ ) महदरण्यमिति विग्रहे अरण्यशब्दात् 'हिमारण्ययोर्म-हत्वे' इति ङीषि आनुकि च जाते अनुबन्धलोपे सवर्णदीर्घे विभक्तिकार्ये तत्सिद्धम् ।

**यवनानी** ( १९४६ ) यवनानां लिपिरिति विग्रहे 'यवनशब्दात् 'यवनाल्लिप्याम्' इति ङीषि आनुकि च विहिते अनुबन्धलोपे सवर्णदीर्घे विभक्ति-कार्ये तत्सिद्धिः ।

**मातुलानी** ( १९२१ )—मातुलस्य स्त्रीति विग्रहे मातुलशब्दात् 'पुंयोगा-दाख्यायाम्' इति ङीषि 'मातुलोपाध्याययोरानुग्वा' इत्यानुकि अनुबन्धलोपे भत्वा-दलोपे विभक्तिकार्ये तत्सिद्धम् । पक्षे 'मातुली' इति ।

**अर्याणी** ( १९४५ ) अर्यशब्दात् स्त्रीत्वविवक्षायाम् 'अर्यक्षत्रियाभ्यां वा स्वार्थे' इति वार्तिकेन ङीषि आनुकि च कृते भत्वादलोपे णत्वे विभक्तिकार्ये 'अर्याणी' इति । पक्षे टापि 'अर्या' इति । स्वामिनी वैश्या वेत्यर्थः । पुंयोगे तु अर्यस्य स्त्री–'अर्यी' इति भवति ।

**क्षत्रियाणी** ( १६३१, ३४, ४५ )—क्षत्रियात् क्षत्रियायां ( स्वभार्यायाम् ) उत्पन्ना स्त्रीति विग्रहे क्षत्रियशब्दात् 'अर्यक्षत्रियाभ्यां वा स्वार्थे' इति ङीषि तत्सन्नियोगेन आनुकि अनुबन्धलोपे भत्वादलोपे 'अट्कुप्वाङ्' इति णत्वे विभक्तिकार्ये 'क्षत्रियाणी' इति । पक्षे अदन्तत्वाट्टापि 'क्षत्रिया' इति । पुंयोगे तु क्षत्रियस्य स्त्री 'क्षत्रियी' इति भवति ।

**वस्त्रक्रीती** ( १६५१ ) वस्त्रेण क्रीता या इति विग्रहे वस्त्र भिस् क्रीत' इति स्थिते 'गतिकारके'ति परिभाषया सुबुत्पत्तेः प्रागेव क्रीतशब्देन समासे सुब्लुकि 'वस्त्रक्रीत' इत्यदन्तप्रातिपदिकात् 'क्रीतात्करणपूर्वात्' इति ङीषि भत्वादलोपे विभक्तिकार्ये तत्सिद्धम् ।

**क्वचिन्न, 'धनक्रीता'** ( १९२१ )—( धनेन क्रीता या सेति विग्रहः ) 'कर्तृकरणे कृता बहुलम्' इति बहुलग्रहणेन 'गतिकारके'ति परिभाषायाः क्वचिदप्रवृत्त्यवगमादिह सुबन्तेन समासः । तत्र च सुपः प्रागेवान्तरङ्गत्वाट्टापि ततः सुपि टाबन्तप्रकृतिकसुबन्तेन ( कृता सु इत्यनेन ) समासे सुब्लुकि धनक्रीताशब्दस्य अदन्तत्वाऽभावान्न ङीषित्यर्थः ।

**अतिकेशी** ( १९२२,३८ )—केशानतिक्रान्तेति विग्रहे समासनिष्पन्नादतिकेशशब्दात् 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति ङीषि भत्वादलोपे विभक्तिकार्ये तत्सिद्धिः । अत्रोपसर्जनन्तु 'एकविभक्ति चापूर्वनिपाते' इत्यनेन बोध्यम् । पक्षे अदन्तत्वाट्टापि 'अतिकेशा' इति ।

**चन्द्रमुखी** ( १६२३,२६,४८,५० )—चन्द्र इव मुखं यस्याः इति विग्रहे समासनिष्पन्नात् 'चन्द्रमुख' शब्दात् 'स्वाङ्गाच्चोपसर्जनात्' इति ङीषि भत्वादलोपे विभक्तिकार्ये तत्सिद्धम् । पक्षे 'चन्द्रमुखा' इति ।

**तटी** (१६५२ )—'तटं त्रिषु' इत्यमरः । जलसमीपप्रदेशः आकृतिविशेषविशिष्टस्तटः । तस्माज्जातिवाचित्वादनियतस्त्रीलिङ्गत्वादयोपधात्तटशब्दात् 'जातेरस्त्रीविषयादयोपधात्' इति ङीषि भत्वादलोपे विभक्तिकार्ये तत्सिद्धम् ।

**कल्याणक्रोडा** ( १९२३ ) कल्याणी क्रोडा यस्या इति विग्रहे समासे 'स्त्रियाः पुंवत्–' इति पुंवत्वे निष्पन्नात् कल्याणक्रोडशब्दात् 'स्वाङ्गाच्चोसर्जनात्–' इति ङीषि प्राप्ते 'नक्रोडादिबह्वचः' इति निषेधे अदन्तत्वाट्टापि सवर्णदीर्घे विभक्तिकार्ये तत्सिद्धिः ।

वृषली ( १६३३ )—वृषलत्वजातिविशिष्टा स्त्री वृषली। अत्र वृषलशब्दात् 'जातेरस्त्री'ति ङीषि भत्वादलोपे विभक्तिकार्ये तत्सिद्धिः। ( एकस्यां हि व्यक्तौ वृषलत्वे कथिते तदपत्यसहोदरादौ कथनं विनापि तस्य सुग्रहत्वाद्वृषलत्वं जातिः।

गवयी ( १९२६ )—इति 'गोसदृशश्चतुष्पाज्जातिविशेषः'। अत्र 'गवय' शब्दस्य योपधत्वात् 'जातेरस्त्री'ति ङीषोऽप्राप्तिः 'योपधप्रतिषेधे हयगवय–'इति वार्तिकबलात् ङीषि भत्वादलोपे विभक्तिकार्ये तत्सिद्धिः।

मनुषी ( १९२२,३९ )—मनुष्यशब्दस्य योपधत्वेऽपि 'योपधप्रतिषेधे हय-गवयमनुष्य–' इति वार्तिकबलात् 'जातेरस्त्री'ति ङीषि भत्वादलोपे 'हलस्तद्धितस्ये' ति यलोपे विभक्तिकार्ये तत्सिद्धिः।

मत्सी ( १९२४, ३३, ४६ )—मत्स्यशब्दस्य योपधत्वेऽपि 'योपधप्रतिषेधे हयगवयमनुष्यमत्स्य' इति वार्तिकबलात् 'जातेरस्त्री'ति ङीषि भत्वात् 'यस्येति च' इत्यलोपे 'मत्स्यस्य ङ्याम्' इति यलोपे विभक्तिकार्ये तत्सिद्धिः।

दाक्षी ( १९४४ )—दक्षस्य गोत्राऽपत्यमिति विग्रहे इञ्प्रत्ययान्तात् दाक्षि-शब्दात् 'इतो मनुष्यजातेः' इति ङीषि भत्वात् 'यस्येति च' इतीकारलोपे विभक्ति-कार्ये 'दाक्षी' इति।

श्वश्रूः (१९ ४५, ४६, ४९)—श्वशुरस्य स्त्रीति विग्रहे पुंयोगलक्षणे ङीषि प्राप्ते तमपवाद्य 'श्वशुरस्योकाराकारलोपश्च' इति वार्तिकेन ऊङि तत्सन्नियोगेन रेफादकारस्य शकारादुकारस्य च लोपे विभक्तिकार्ये 'श्वश्रूः' इति।

वामोरूः (१९२२)—वामौ = सुन्दरौ ऊरू यस्याः' इति विग्रहे समासनिष्प-न्नात् वामोरुशब्दात् 'संहितशफलक्षणवामादेश्च' इत्यूङि सवर्णदीर्घे विभक्तिकार्ये उक्तं रूपं जातम्।

शार्ङ्गरवी (१९५२) शृङ्गरुशब्दादपत्येऽणि आदिवृद्धौ 'ओर्गुणः' इति गुणेऽ-वादेशे 'शार्ङ्गरव' इति तस्मात् जातित्वान्ङीषि प्राप्ते तम्प्रबाध्य 'शार्ङ्गरवाद्यञो ङीन्' इति ङीनि भत्वादलोपे विभक्तिकार्ये तत्सिद्धिः।

वैदी ( १९२१ )—विदस्यापत्यमिति विग्रहे अञा निष्पन्नात् वैदशब्दात् 'शार्ङ्गरवाद्यञो ङीन्' इति जातिलक्षणप्राप्तङीषं बाधित्वा ङीनि भत्वादलोपे विभक्ति-कार्ये तत्सिद्धम्।

**नारी** ( १९५१ ) नृशब्दात् 'ऋन्नेभ्यः' इति ङीपि प्राप्ते तं प्रबाध्य 'नृनरयोर्वृद्धिश्च' इति ङीनि वृद्धौ च कृते रपरत्वे विभक्तिकार्ये 'नारी' इति। नरशब्दादपि जातिलक्षणे ङीषि प्राप्ते तम्बाधित्वाऽनेन ङीनि भत्वादलोपे विभक्तिकार्ये 'नारी' इति भवति।

**युवतिः** ( १९२५, २९, ३०, ३२, ४७, ४८, ५० )—युवन्शब्दात् स्त्रीत्वविवक्षायां 'यूनस्तिः' इति तिप्रत्यये 'स्वादिष्वि'ति पदत्वान्नलोपे विभक्तिकार्ये 'युवतिः' इति। 'युवती' इति दीर्घकारान्तोऽपि स्त्रियां वर्तते। तत्तु युधातोर्लटः शतरि शपो लुकि उवङि उगित्वात् ङीपि 'युवती' इति। ( यौति = पत्या सह आत्मानं मिश्रीकरोतीत्यर्थः।

इति दरभंगामण्डलान्तर्गत ''तरौनी' ग्रामवासिशास्त्रार्थदिवाकर-
पण्डितराजश्रीजयदत्तझाशर्मात्मजश्रीमदनन्तलालझाशर्म-
सूनुना श्रीरामचन्द्रझाव्याकरणाचार्येण विरचिता
लघुसिद्धान्तकौमुदीप्रश्नोत्तरी समाप्ता।



॥ श्रीः ॥

# 'बनारस' प्रथमपरीक्षायाः

## प्रश्नपत्राणि

### प्रथमं पत्रम् १९४०

### लघुकौमुद्यां प्रश्नाः

१. लण् सूत्रेऽकारस्येत्संज्ञायाः फलं तदुदाहरणञ्च ब्रूत । ६

२. कृष्णर्द्धिः, उत्थानम्, सन्च्छम्भुः, हरी रम्यः, एतेषां प्रयोगाणां सूत्रनिर्देशपुरस्सरं सिद्धिं प्रदर्शयत । १२

अथवा

विष्णो + इह, किम् + उक्तम्, तद् + शिवः, सुगण् + षष्ठः, इत्यस्यां स्थितौ कानि रूपाणि भवन्ति, कथञ्च तत्सिद्धिरिति ससूत्रं प्रतिपादयत ।

३. (क) सखा, सतौ, त्वया, भवेयुः, अध्ययै, अनड्‌ ।

(ख) गाः, दध्नि, अमुया, एधस्व, पपरतुः, अनजानि ।

उपरिनिर्दिष्टयोः क, ख, प्रश्नयोर्मध्ये कस्यचिदेकस्य सम्पूर्णस्य प्रश्नस्य प्रयोगान् सम्यक् प्रसाधयत । १८

४. अवोभवुः राजानति, धर्ममुच्चरते, अस्तावि, गोमयनिकायः, मातुः स्मरति, एतेषां प्रयोगाणां ससूत्रं सिद्धिप्रकारं लिखत । १८

५. अध्यात्मम्, रूपवद्भार्यः, सखिपथः, एतेषु समासविधायकानि सूत्राणि तत्तद्विशेषकार्यञ्च स्फुटं प्रदर्शयत । ९

६. द्वैमातुरः, मीमांसकः, शालीयः, आश्मनम्, नैकटिकः, मातृभोगीणः, एतेषु तत्तदर्थबोधकप्रत्ययविधायकानि शास्त्राणि साधु प्रतिपादयत । प्रयोगाणामर्थश्च लेख्यः । १८

७. मघवन्, निर्जर, अतिचमू, शब्देषु कयोश्चिद् द्वयोः शब्दयोः सर्वाणि रूपाणि विलिख्य, श्रु श्रवणे, हन हिंसागत्योः, रुधिर आवरणे, एतेषु कयोश्चिद् द्वयोः धात्वोः सर्वलकारेषु प्रथमं रूपञ्च स्पष्टं लिखत । १०

सूचना—स्पष्टसुन्दराक्षरविन्यासाय दशाङ्काः सुरक्षिता इति बोध्यम् ।

---

## सन् १९४१

१ अ-क-ग-हवर्णेषु कयोरपि द्वयोर्वर्णयोर्बाह्यप्रयत्ना लेख्याः। ४

२. हर इह, प्रार्च्छति, गवाग्रम्, एतन्मुरारिः, तच्छिवः, मनोरथः—एषु केऽपि चत्वारः प्रयोगाः सम्यक् साधनीयाः। १२

३. सर्वेषाम्, क्रोष्टुः, मत्याम्, वारिणे, अनड्वान, यूनः, पुमान्, अहोभ्याम्—एतेषु पञ्चानां प्रयोगाणां सूत्रनिर्देशपुरस्सरं सिद्धिप्रकारः प्रदर्शनीयः। १५

४. (क) सखिशब्दस्य राजन्शब्दस्य वा सर्वासु विभक्तिषु रूपाणि लेख्यानि।
(ख) रक्षणार्थक-गुपू-धातोः, गात्रविक्षेपार्थक-नृती-धातोर्वा लृटि रूपाणि लेख्यानि। १०

५. यरोऽनुनासिकेऽनुनासिको वा, कर्तुरीप्सिततमं कर्म, जातेरस्त्रीविषयाद्-योपधात्—
एतेषु कयोश्चिद् द्वयोः सूत्रयोः पदच्छेदपूर्वकमर्थो लेख्यः। ४

६. भवेत्, इयाज, जघास, नेनिजानि, अजनि, चिकाय, उद्विजिता, तृणेढि, गृहाण—
एषु पञ्च प्रयोगान् साधु साधयत। १५

७. बुभूषति, इदामति, प्रियंवदः, रागः, पौर्वशालः, चित्रगुः—एतेषां प्रयोगाणां विग्रहप्रदर्शनपूर्वकं सिद्धिम् प्रदर्शयत। १८

८. शैवः, वैयाकरणः, ज्यायान्, कुमारी एते प्रयोगा विग्रहप्रदर्शनपुरस्सरं साधनीयाः, प्रयोगाणामर्थाश्च हिन्दीभाषया लेख्याः। १२

सूचना अस्मिन् पत्रे दशाङ्काः सुस्पष्टसुन्दरलेखाय सुरक्षिताः।

## सन् १९४२

१. सवर्णसंज्ञाविधायकं संहितासंज्ञाविधायकं च सूत्रं विलिख्य, हिन्दीभाषया तयोरर्थो लेख्यः। ४

२. प्रष्ठौहः, शकन्धुः, वाग्घरिः, पुंस्कोकिलः, शिवो वन्द्यः, तृढ :—
एषु केऽपि चत्वारः प्रयोगाः साधु साधनीयाः। १२

३. विश्वपः, बहुश्रेयस्याम्, तिसृणाम्, दध्नि, विश्वौहः, अद्भिः, त्रिदुःषः, दीव्यन्ती,—एतेषु पञ्चानां प्रयोगाणां साधुत्वप्रकारः सम्यक् प्रदर्शनीयः। १५

४. (क) मतिशब्दस्य सर्वासु विभक्तिषु रूपाणि लेख्यानि।
(ख) हर्षक्षयार्थकग्लै-धातोराशीर्लिङि रूपाणि लेख्यानि। १०

५. ङमो ह्रस्वादचि ङमुण् नित्यम्, तदोः सः सावनन्त्ययोः, साधकतमं करणम्, एतेषु कयोश्चिद् द्वयोः सूत्रयोः पदच्छेदपूर्वकमर्थो लेख्यः। ४

६. बभूव, अद्युतत्, अविजगे, अनिजत्, अपादि, किरति, क्रियात्, ग्रहीता, अजीगणत्—एषु केऽपि पञ्च प्रयोगाः सम्यक् साधनीयाः। १५

७. पिपठिषति, विरमति, कुम्भकारः, चिकीर्षा, अतिमालः, सुराजा,—एतेषां प्रयोगाणां विग्रहप्रदर्शनपूर्वक सिद्धिप्रकारः प्रदर्शनीयः। १८

८. द्वैमातुरः, जनता, दण्डी, गोपी—
एते प्रयोगा विग्रहप्रदर्शनपुरस्सरं साधु साधनीयाः, प्रयोगाणामर्थाश्च हिन्दीभाषया लेख्याः। १२

सूचना—अस्मिन् पत्रे दशाङ्काः सुस्पष्टसुन्दरलेखाय नियताः।

## सन् १९४२
## ( प्रथमं पत्रम् )

१. इ–ख–ट–श–वर्णेषु कयोरपि द्वयोर्वर्णयोर्बाह्यप्रयत्ना लेख्याः। ४

२. गव्यूतिः, शिवेहि, गवाग्रम्, सर्पिष्टमम्, तच्छिवः, भो देवाः, मनोरथः—एषु केऽपि पञ्च प्रयोगाः साधु साधनीयाः। १५

३. सर्वेषाम्, हरौ, सखा, क्रोष्टुः, तिस्रः, वारिणे–एतेषु केषामपि चतुर्णां प्रयोगाणां साधुत्वप्रकारः सम्यक् प्रदर्शनीयः। १६

४. मघोनः, पन्थाः, अष्टौ, युष्माकम्, उदीचः, पुमान्, चतस्रः, तुदन्ती—एषु केऽपि पञ्च प्रयोगाः स्पष्टं साध्यन्ताम्। २०

५. मा, चिरम्, तूष्णीम्, सार्धम्—एषामव्ययानां हिन्दीभाषायामर्था लेख्याः ४

६. अभूत्, नेदतुः, अकटीत्, अपुः, शृणु, अगमत्—एषु चतुर्णां प्रयोगाणां सूत्रनिर्देशपुरःसरं सिद्धिप्रकारः प्रदर्शनीयः। १६

७. एधाञ्चक्रे, अचीकमत, अद्युतत्, वर्त्स्यति, भृषीष्ट, ईजतुः, उवोढ—एषु केऽपि चत्वारः प्रयोगाः साधु साधनीयाः। १६

८. (क) सखिशब्दस्य षष्ठ्येकवचने, पितृशब्दस्य सप्तम्येकवचने, दधिशब्दस्य तृतीयैकवचने, तथा युष्मच्छब्दस्य चतुर्थीबहुवचने रूपाणि लेख्यानि।

(ख) चि–पा–गम्–भज्–वह् धातूनां लुङि प्रथमपुरुषैकवचने रूपाणि लेख्यानि। ९

## सन् १९४२
## ( द्वितीयं पत्रम् )

१. "ध्वसोरेद्धावभ्यासलोपश्च", "भ्रस्जो रोपधयो रमन्यतरस्याम्", "विधिनिमन्त्रणाऽऽमन्त्रणाऽधीष्टसंप्रश्नप्रार्थनेषु लिङ्"। एषामर्थो लेख्यः। १०

२. दानार्थक 'डुदाञ्' धातोर्लुङि, उपदेहार्थक 'लिप' धातोर्लङि च रूपाणि लिखत। १५

३. जक्षतुः। बिभर्ति। उपास्किरत्। अतृणेट्। स्तभान। अचूचुरत्। एषु केऽपि चत्वारः प्रयोगाः साधनीयाः, अन्तिमो न हेयः। १२

४. भावयति। नरीनृत्यते। राजानति। प्रवहति। भूयते। आरिता। पच्यते फलम्। स्मरसि कृष्ण गोकुले वत्स्यामः। अत्र केष्वपि पञ्चसु विग्रहसूत्र-प्रदर्शनपूर्वकं तत्तद्विशेषकार्याणि प्रदर्शयत। १५

५. एधितव्यम्। सोमयाजी। विद्वान्। प्रकृत्य। स्मारं स्मारम्—एषु त्रयाणामेव विग्रहप्रकृतिप्रत्ययतदर्थप्रदर्शनपूर्वकं सिद्धिः कार्य्या। १२

६. गां दोग्धि पयः। विप्राय गां ददाति। अनयोः कारकविभक्तिविधायकानि सूत्राणि प्रदर्शयत। ६

७. अधिहरि। भूतबलिः। पौर्वशालः। द्व्यङ्कुलम्। चित्रगुः। वाक्त्वचम्। एषु चत्वारो विग्रहप्रदर्शनपूर्वकं साधनीयाः। १२

८. गार्ग्यः। वायव्यम्। मदीयः। म्रदिमा। कुरुचरी। चन्द्रमुखी। युवतिः। विग्रहप्रदर्शनपूर्वकं सूत्रोपन्यासमुखेन प्रकृतिप्रत्ययाः प्रदर्शनीयाः। सूचना-अत्र षडेव प्रयोगाः प्रष्टव्या ज्ञेयाः। १८

## सन् १६४४

### ( प्रथमं पत्रम् )

१. अ थ स वर्णानां बाह्यप्रयत्नाः, अथवा, प्रत्याहारविधायकसूत्रस्य पदच्छेदो हिन्दीभाषायामर्थश्च सोदाहरणं लेख्याः। ६

२. धात्रंशः, कृष्णर्द्धिः, वाप्यश्वः, उत्थानम्, सँस्स्कर्ता, एषको रुद्रः, एषु यथेच्छं चतुर्णां प्रयोगाणां सूत्रनिर्देशपूर्वकं सिद्धिं दर्शयित्वा, हर इह, देवा इह, रामकृष्णावमू आसाते, इत्यत्र स्वरसन्धिः कथन्नेति लिखत। १५

३. निर्जरसौ, कति, क्रोष्टूनाम्, चतसृणाम्, सर्वस्याम्, दध्नि, एषु केऽपि चत्वारः प्रयोगाः साधु साधनीयाः। १६

४. (क) चतुर्षु, आभ्याम्, यूनः, युष्माकम्, तादृक्, समीचः, अमुना, अमुष्याम्, धनूंषि, एषु केऽपि चत्वारः प्रयोगाः साध्यन्ताम्। १६

(ख) पति, पपी, शब्दयोर्ङौ, नेमशब्दस्य जसि, तथा वारि, विद्वस्, शब्दयोः सम्बुद्धौ रूपाणि लेख्यानि। ९

५. अन्तरेण, निकषा, नक्तम्, विना, एषु कयोरपि द्वयोरव्यययोः प्रयोगो वाक्ये कर्तव्यः। ६

६. बभूविथ, चिच्छेथ, आनर्चतुः, श्रण्मः, अगौह्याम्, आतीत्, एषु यथेच्छं त्रयाणां साधनं विधाय पान्तेषु के धातवोऽनिट इति लेख्यम्। १६

७. (क) एधाञ्चक्रुषे, अस्रसत्, अवर्त्स्यत, भ्रियात्, ऊहुः, हृषीष्ट, अजागरीत्, एषु केषामपि चतुर्णां सिद्धिप्रकारो लेख्यः । १६

(ख) गुप्-यज्-,हु श्रु-धातूनां लुङि प्रथमपुरुषैकवचने रूपाणि लेखनीयानि । ४

## सन् १९४४

### ( द्वितीयं पत्रम् )

१. अधोलिखितानां सूत्राणां हिन्दीसंस्कृतभाषयोर्यथेच्छमेकतरस्यां सोदाहरणं ससमन्वयमर्था लेख्याः । १५

(१) 'असिद्धवदत्राभात्' (२) 'ओः पुयण्ज्यपरे' (३) 'कर्मणा यमभिप्रैति स सम्प्रदानम्'

२. डुधाञ् धातोर्लटि, डुक्रीञ् धातोर्लुङि रूपाणि लिखत । १०

३. और्णुविष्ट । भुज्यात् । अतृणेट् । अग्रहीत् । अचकथत् । एते सम्यक् साधनीयाः । १५

४. अतिष्ठिपत् । जिघत्सति । बोभवीति । पुत्रीयति । रथेन सञ्चरते । एषु विग्रहप्रदर्शनपूर्वकं सूत्रोल्लेखनमुखेन विशेषकार्याणि प्रदर्शयत । १६

५. दानीयः । श्लेयम् । दर्शकः । भोजम् भोजम् । विग्रहप्रदर्शनपूर्वकं साधनीया इमे प्रयोगाः । १५

६. बलिं याचते वसुधाम् । सर्वस्मिन्नात्मास्ति । सूत्रलेखनेन विभक्त्यर्थाः प्रदर्शनीयाः ।

७ भूतपूर्वः । पञ्चगवम् । चित्रगुः । गवाक्षः । विग्रहप्रदर्शनमुखेन समासविधायकानि प्रदर्श्य साधनीया इमे । १२

८. दैव्यम् । रैवतिकः । गोत्वम् । बहुशः । देवी । मृडानी । दाक्षी । एते विगृह्य प्रकृतिप्रत्ययांश्च प्रदर्श्य साधनीयाः । १८

## सन् १९४५

१ (क) उदात्त, स्वरित, संहितालक्षणानि 'लिखित्वा' शिवेहि, गवाग्रम्, चिन्मयम्, देवा इह, तच्छ्लोकेन, काँस्कान्, एषु केचन त्रयः प्रयोगाः सूत्रप्रदर्शनपूर्वकं साधनीयाः। १२

(ख) ओष्णम् इत्यत्र कथं सन्धिः ? एहि कृष्ण३ अत्र, इत्यत्र च कथं तदभावः ? इति लिखत । ३

२ (क) हरौ, बहुश्रेयस्याम्, स्त्रीणाम्, वारीणाम्, विश्वौहः, तादृक्, अमूषाम्, धनूंषि, एषु कानपि षट् प्रयोगान् संसाध्य, अव्ययलक्षणं लिखत । १८

(ख) ग्रामणी, प्रधी शब्दयोर्ङौ, धातृ, उशनस्, इदम् शब्दानां सम्बोधने रूपाणि लेख्यानि । ५

३ (क) भूयास्ताम्, अचीकमत, तिरस्करोतु, अविभ्रमः, भुञ्ज्यात्, लिण्ड्ढ, कुर्वन्ति, अजीगणत्, एषु यथेष्टं पञ्चानां सिद्धिं दर्शयित्वा, भ्वादीन् धातून् नामग्राहं लिखत । १८

(ख) गुपू, शीङ्, युज्, प्रच्छ धातूनां लुङि प्रथमपुरुषैकवचने रूपाणि लिखत । ५

४ अतिष्ठिपत्, चिकीर्षति, बोभवाञ्चकार, समिधिता, सर्पिषो जानीते, आरिता, पच्यते फलम्, एष गच्छामि, एषु केषामपि चतुर्णां साधनं विधाय, दानीयो विप्रः, उच्छूनः, दुष्करः, अन्यथाकारम्, एषां कृत्प्रत्ययार्थप्रदर्शनमुखं सिद्धिर्दर्शनीया, कर्तृकर्मनिर्देशोऽपि कर्तव्य एव २०

५ (क) बलिं भिक्षते वसुधाम्, अधिहरि, पौर्वशालः, हास्तिकम्, भूयिष्ठः, श्वश्रूः, एते यथाकार्यं संक्षेपेण दर्शनीयाः । १५

(ख) अर्य, सूर्य, युवन्, क्षत्रिय, शब्दानां स्त्रियां प्रथमैकवचने रूपाणि तत्तत्प्रत्ययाँश्च लिखत । ४

## सन् १९४६

१ अ-श-वर्णयोर्बाह्याभ्यन्तरप्रयत्नान् लिखित्वा, "अणुदित्सवर्णस्य चाप्रत्ययः" इति सूत्रस्य हिन्द्यामर्थं प्रयोजनञ्च लिखत । १०

अथवा

"तुल्यास्यप्रयत्नं सवर्णम्", "अणुदित्सवर्णस्ये"ति च सूत्रं किं किं कार्यं कुरुतः ।

२ विष्णो-इति, वाक्-हरिः, भोस्-देवाः, हरिस्-राजते, सस्-शम्भुः, अत्र यथेष्टं त्रयाणां सिद्धिः कर्तव्या। १५

३ रामाय, विश्वपः, सखा, तिसृणाम्, प्रशाम्याम्, यूनः, प्रतीचः, अमुष्यै, सुपुमांसि, एषु स्वेच्छया चतुरः प्रयोगान् संसाध्य, पिधानम्, उदेतोः, इत्यत्र किं किं कार्यमिति लिखत । १८

४ त्रि, बहुश्रेयसी-शब्दयोः आमि, मति, दधि, विपठिप्-शब्दानां ङिविभक्तौ, वह, तनु, शीङ्, धृञ्-धातूनाञ्च लुङि प्रथमपुरुषैकवचने रूपाणि लेख्यानि । १०

५ । भवेत्, एधाञ्चक्रषे, अगौसाम्, ममङ्क्थ, रुन्धः, अतत, अचकथत्, एषु यथेष्टं चतुर्णां सिद्धिं प्रदर्श्य "नेर्गदे"ति समस्तसूत्रं लिखत । १२

६ अबीभवत्, जिवत्सति, नरीनृत्यते, इदामति, रथेन संचरते, अभाजि, यजति स्म युधिष्ठिरः, एषु केषामपि चतुर्णां साधनं कृत्वा यशस्करी, सन्द्विजः, चिकीर्षा, देवित्वा, एषां द्वयोरेव कृत्प्रत्ययार्थप्रदर्शनपूर्वं सिद्धिः कार्या । १५

७ मातुः स्मरति, अध्यात्मम्, निष्कौशाम्बिः, राजन्यः, पटीयान्, मत्सी, एषु विशेषकार्याणि, विशेषसूत्रैर्दर्शनीयानि । १६

८ हरित, यवन, श्वशुर, आचार्य-शब्दानां द्वयोरेव कयोश्चिद् स्त्रियां प्रथमैक-वचने रूपाणि लिखत। २

सन् १६४७

१. सवर्णाऽनुनासिकसंज्ञाविधायके सूत्रे सार्थे लिखित्वा थ, ज, ङ, व–एषां वर्णानामुच्चारणस्थानानि लिखत। १२

अथवा—

प्रयत्नाः कति ? के च ते ? ह, प, य वर्णानाम् आभ्यन्तरप्रयत्नान् स्पष्टं लिखत।

२. धात्रंशः, गव्यम्, हर इह, सुखार्तः, शिवायों नमः, आ एवं नु मन्यसे, सञ्च्छम्भुः, सैषदाशरथी रामः–एषु पञ्च प्रयोगान् सूत्रोद्धरणपूर्वकं साधयत २५

३. रामाणाम् पूर्वस्मात्, सख्युः, क्रोष्टुः, मतौ, श्रियाम्। मातृः—एषु पञ्च प्रयोगान् सूत्रनिर्देशपूर्वकं साधयत। १५

४. विश्वौहः, एनयोः, अस्माकम्, विदुषः, अमुना, अद्भिः, तुदन्ती एषु पञ्च-प्रयोगान् सूत्रोपन्यासपूर्वकं साधयत। १५

५. अभूत्, जग्मतुः, एधाञ्चक्रे, अभृत, जहि, अवोचत्—एषु रूपेषु यथेच्छं द्वे साधयत। ८

६. सखि, कति, पितृ-शब्दानां सर्वविभक्तिषु रूपाणि लिखित्वा, विश्ववाह्-शब्दस्य पुंलिङ्गे, चतुर्शब्दस्य स्त्रीलिङ्गे सर्वाणि रूपाणि लिखत। १५

अथवा—

स्त्री, वारि, युष्मद्, अहन्, धनुष्—शब्दानां सर्वविभक्तिषु रूपाणि लिखत।

७. भू-विध्-धात्वोर्लिटि, गुप्धातोर्लुङि सर्वाणि रूपाणि लिखत। १०

अथवा—

क्रमधातोर्लटि, श्रुधातोर्लुटि, हन्धातोर्लोटि, ऊर्णुञ् धातोर्लिटि रूपाणि लिखत।

सन् १६४८

१. (क) त–ट वर्णयोः स्थानं बाह्यप्रयत्नमाभ्यन्तरप्रयत्नं च लिखत ६

(ख) आदिरन्त्येन सहेता, कृन्मेजन्तः, ईच गणः, यञोऽचि च, लट्स्मे, उय, च एषु त्रयाणां सूत्राणां अर्थाँल्लिखत। ९

२. गव्यूतिः, प्राच्छंति, चक्रयत्र, उत्थानम्, षट्सन्तः, नॄँ पाहि, शिवोऽर्च्यः एषु केषाञ्चित्पञ्चानां रूपाणां सिद्धिं कुरुत। १५

३. सर्वेषाम्, नृणाम्, मत्यै, दध्ना, अनड्वान्, मघोनः, उपानत्, ददन्ति एषु कानिचित्पञ्च रूपाणि साधयत। १५

४. अभूवन्, अगमत्, अचीकमत, अवधीत्, पप्रतुः, नर्तिष्यति, सुनोति, उपस्किरति, शिण्ढि, कुर्वन्ति एषु षड्रूपाणि साधयत। १५

५. अतिष्ठिपत्, चिकीर्षति, बोभूयते, कष्टायते, विजयते, अनुकरोति, अक्रामि, चेयम्, भिक्षुः, जलपाकः, चयः, भोज्यं भोज्यम्, क्षिप्राय गां ददाति एषां मध्ये पञ्चसु प्रयोगेषु विशेषसूत्रैर्विशेषकार्याणि प्रदर्शयत । १५

६. उपशरदम्, राजपुरुषः, आर्धर्चम्, द्विमूर्धः, पितरौ, दाक्षिः, जङ्गलः, आस्माकीनः, शरण्यः, सुद्री, चन्द्रमुखी, युवतिः एषु कांश्चित्षट् प्रयोगान् साधयत । १५

७. अदस्-शब्दस्य सर्वलिङ्गेषु रूपाणि प्रदर्श्य क्रीधातोरर्थं रूपाणि च लिखत १०

## सन् १९४९

१. (क) ख, ह-वर्णयोः स्थानं बाह्यप्रयत्नमाभ्यन्तरप्रयत्नं च लिखत । ६

(ख) तुल्यास्यप्रयत्नं सवर्णम्, अव्ययादाप्सुपः, मितां ह्रस्वः, यङो वा, न यदि, तरप्तमपौ घः, प्रज्ञादिभ्यश्च एषु त्रयाणां सूत्राणामर्थाँल्लिखत । ९

२. गव्यम्, शिवेहि, विष्णो इति, तल्लयः, तच्छिवः, लक्ष्मीच्छाया, मनोरथः, एषु केषाञ्चित्पञ्चानां रूपाणां सिद्धिं कुरुत । १५

३. रामाणाम्, सखा, पितरौ, स्त्रियम्, ज्ञानानि, विश्वौहः, अमुना, अमुष्यै, दीव्यन्ती—एषु कानिचित्पञ्च रूपाणि साधयत । १५

४. भवानि, अगोपीत्, ऐधिष्ट, अवोचत्, नेनिजानि, अदीपि, अधावीत्, असिचत्, हिनस्ति, अतत, व्यष्टभत्, गणयति, एषु षड्रूपाणि साधयत १५

५. बुभूषति, नरीनृत्यते, पुत्रीयति, निविशते, प्रवहति, भूयते, शिष्यः, पण्डितंमन्यः, लवित्रम्, पवः, हित्वा, कटे आस्ते एषां मध्ये षट्सु प्रयोगेषु विशेषसूत्रैर्विशेषकार्याणि प्रदर्शयत । १५

६. पञ्चगङ्गम्, पञ्चगवम्, परमराजः, अन्तर्लोमः, शिवकेशवौ, वैनतेयः, वैयाकरणः, आधिदैविकम्, सार्वभौमः, कुमारी, इन्द्राणी, श्वश्रूः एषु कांश्चित् षट् प्रयोगान् साधयत । १५

७. मघवन्शब्दस्य सर्वासु विभक्तिषु रूपाणि प्रदर्श्य यज्—धातोरर्थं लुङि च रूपाणि लिखत । १०

## सन् १९५०

१ (क) च, य—वर्णयोः स्थानं, बाह्यप्रयत्नमाभ्यन्तरप्रयत्नञ्च लिखत । ६

(ख) वान्तो यि प्रत्यये, स्वरादिनिपातमव्ययम्, भुजोऽनवने, हेतुमति च, नेर्विशः, ज्य च, सप्तम्यास्त्रल्—एषु त्रयाणामेव सूत्राणां पदच्छेदम्, अर्थान्, उदाहरणानि च लिखत । ९

२ उपेन्द्रः, गवाग्रम्, चक्रि अत्र, एतन्मुरारिः, पुंस्कोकिलः, सम्भुश्शम्भुः, शिवोऽर्च्यः, स शम्भुः—एषु केषाञ्चित् पञ्चानां रूपाणां सिद्धिं कुरुत । १५

३ रामान्, सर्वेषाम्, गाः, मत्याम्, दध्ना, चतुर्णाम्, त्वया, विदुषः, उपानत्, अहोस्थाम्—एषु कानिचित् पञ्च रूपाणि साधयत । १५

४ बभूव, अगादीत्, ग्लैवे, अध्वनीष्ट, देहि, अपाक्षि, असावीत्, क्रष्टा, कुर्यात्, ग्रहीता, कथयति, चिकीर्षति—एषु षड्रूपाणि साधयत । १५

५ बोभूयते, बोभवीति, कष्टायते, विरमति, अमाजि, पच्यते फलम्, मज्जतिस्म युधिष्ठिरः, कार्यम्, उष्णभोजी, भिन्नः, चयः, पाद्यं पादम्, अग्नये स्वाहा—एष मध्ये षट्सु प्रयोगेषु विशेषसूत्रैर्विशेषकार्याणि प्रदर्शयत । १२

६ उपशरदम्, पौर्वशालः, महाराजः, चित्रगुः, हरिहरौ, गार्ग्यः, औदुम्बरो देशः, राष्ट्रियः, धार्मिकः, नाव्यम्, एनी, चन्द्रमुखी, युवतिः—एषु कांश्चित् षट् प्रयोगान् साधयत । १५

७ निर्जर—शब्दस्य सर्वासु विभक्तिषु, क्षुर—धातोः केषुचित् पञ्चलकारेषु च रूपाणि प्रदर्शयत । १०

## सन् १९५१

१ (क) लृवर्णस्य कति भेदाः ! पकारस्य च किं स्थानम् ! कश्च बाह्यप्रयत्नः ! ५

(ख) आदिरन्त्येन सहेता, भूवादयो धातवः, औतोऽम्शसोः, आर्द्धधातुकस्येड्वलादेः, विदेः शतुर्वसुः, राजश्वशुराद्यत्, एतेषु स्वेच्छया त्रयाणां पदविभागं प्रदर्श्य सोदाहरणमर्था लेख्याः । ९

२ देवैश्वर्यम्, ब्रह्मऋषिः, उत्थानम्, सन्नच्युतः, शिवच्छाया, शिवोवन्द्यः, अघोयाहि, मनोरथः, अत्र केषाञ्चिच्चतुर्णां सिद्धिम् विधाय प्र+एजते, अथवा विद्वान्+लिखति, अथवा विष्णुः+त्राता, अत्र सन्धौ किं रूपमिति सप्रमाणं लिख । १९

३ रामाय, विश्वपः, पत्यौ, क्रोष्टुः, मत्याम्, अनड्वान्, अयम्, अद्भ्यः, एनयोः, गोत्रा, एतेषु पञ्चैव प्रयोगाः साधु साधनीयाः । १९

४ बभूविथ, आनर्च, अचैषीत्, ह्वयात्, बिभेति, धेहि, अप्राक्षीत्, अकृत, एतेषु पञ्चानां सम्यक् सिद्धिः कार्या । १५

५ बुभूषति राजीयति, एधोदकस्योपस्कुरुते, भिद्यते काष्ठम्, स्मरसि कृष्ण गोकुले वत्स्याम , अत्र चतुर्षु विशेषकार्यविधायकसूत्राण्येवोल्लेख्यानि । ८

६ चेयम्, लवणः, जनमेजयः, सोमयाजी,शुष्कः, वेपथुः, इत्थङ्कारं भुङ्क्ते, एतेषु पञ्च प्रयोगाः साधनीयाः । १५

७ बलिं याचते वसुधाम्, हरये नमः, अधिगोपम्, व्याघ्री, चित्रगुः, गार्ग्यः, वैनतेयः, नर्तकी, वस्त्रक्रीती, नारी, एतेषु षण्णां सिद्धिः कार्या । १८

## सन् १९५२

१ (क) वृद्धि-सवर्ण-गुरुसंज्ञासूत्राणि सार्थमुल्लिख्य बाह्यप्रयत्नांल्लिख ? १०

(ख) अकारस्य कति भेदाः ? के च ते ? ५

२. सुद्ध्युपास्यः, गव्यम्, हरेऽव, कृष्णऽर्द्धिः, तट्टीका, वाग्घरिः, शिवच्छाया, अधोयाहि, अत्र केषाञ्चित् चतुर्णां सिद्धिं विधाय मनस्+रथ इत्यत्र सन्धि-गतं रूपं साधय । १५

३. रामान्, सर्वेषाम्, हरौ, सख्युः, गाम्, मतये, तिस्रः, दध्ना, एभिः, अष्टौ, अत्र पञ्चानां साधुत्वं विधाय अस्मच्छब्दस्य अथवा युष्मच्छब्दस्य सप्तसु विभक्तिषु रूपाणि लिख ? २०

४. भविता, सिषेधिथ, जगद, अगमत्, दुग्धः, अचैषीत्, कुर्वन्ति, गृहाण, अत्र स्वेच्छया चतुर्णां सिद्धिं विधाय द्युतधातोर्लुङि अथवा यज धातोर्लुटि रूपाणि लिख ? १८

५ अबीभवत्, वाव्रज्यते, राजीयति, रथेन सञ्चरते, यजतिस्म युधिष्ठिरः, अत्र प्रथममपरित्यज्य त्रयाणां साधुत्वं विधेयम् ? ९

६. "स्यसिच्०—" इत्यादि सूत्रं सम्पूर्णमुल्लिख्य "प्रातिपदिकाद्धात्वर्थे बहुल-मिष्ठवच्च" इतिवचनस्यार्थोऽविकलो लेख्यः ? ५

७. वशंवदः, भिन्नः, अपामार्गः, वृक्षमवचिनोति फलानि, प्रजाभ्यः स्वस्ति, अर्द्धपिप्पली, चित्रगुः, वात्स्यः, कुमुद्वान्, युग्यः, तृतीयः, गौरी, इन्द्राणी, तटी, शार्ङ्गरवी—एतेषु स्वेच्छया षण्णां सिद्धिः कार्य्या ? १८

---

## द्वितीयं पत्रम्

### सन् १९४८

रामवनगमन-विदुलोपाख्यान-छन्दःसु प्रश्नाः ।

१. अधोलिखितेषु पद्येषु केषामपि षण्णामन्वयविग्रहभावार्थवक्तृबोद्धव्यप्रद-र्शनपुरस्सरं व्याख्या कार्या । ६०

(क) अनन्यभावामनुरक्तचेतसं त्वया वियुक्तां मरणाय निश्चिताम् ।
नयस्व मां साधु कुरुष्व याचनां नातो मया ते गुरुता भविष्यति ॥

(ख) मयार्चिता देवगणाः शिवादयो महर्षयो भूतगणाः सुरोरगाः ।
अभिप्रयातस्य वनं चिराय ते हितानि काङ्क्षन्तु दिशश्च राघव ॥

---

(ग) द्युमत्सेनसुतं वीरं सत्यवन्तमनुव्रताम् ।
साविश्रीमिव मां विद्धि त्वमात्मवदवर्त्तिनीम् ॥
(घ) अनृतं बत लोकोऽयमज्ञानाद्यद्धि वक्ष्यति ।
तेजो नास्ति परं रामे तपतीव दिवाकरे ॥
(ङ) उत्थातव्यं जागृतव्यं योक्तव्यं भूतिकर्मसु ।
भविष्यतीत्येव मनः कृत्वा सततमव्यथैः ॥
(च) निरमर्षं निरानन्दं निर्वीर्यमरिनन्दनम् ।
मास्म सीमन्तिनी काचिज्जनयेत् पुत्रमीदृशम् ।
(छ) श्रुतेन तपसा वापि श्रिया वा विक्रमेण वा ।
जनान् योऽभिभवत्यन्यान् कर्मणा हि स वै पुमान् ॥

२. अधोलिखितपद्येषु कयोरपि द्वयोर्हिन्दीभाषायां स्पष्टार्थो लेखनीयः ।
कस्य कं प्रति कथनमित्यपि लेख्यम् । १०
(क) अस्वाधीनं कथं दैवं प्रकारैरभिराध्यते ।
स्वाधीनं समतिक्रम्य मातरं पितरं गुरुम् ॥
(ख) क्षमावान्निरमर्षश्च नैव स्त्री न पुनः पुमान् ।
(ग) परं विषहते यस्मात् तस्मात् पुरुष उच्यते ।

३. विदुलायाः सञ्जयोपदेशे किं कारणम् ? उपदेशस्य च कः सारांशः ? इति हिन्दीभाषायां सुस्पष्टं लेखनीयम् । १०

४. भुजङ्गप्रयात–प्रहर्षिणी–वंशस्थवृत्तानां सोदाहरणं लक्षणं लिख्यताम् । १५

५. वर्णानां गुरुत्वं कुत्र कुत्र भवति ? रगण–जगण–सगणानां कीदृशं स्वरूपम् भवति ? ५

## सन् १६४६

### रामवनगमनविदुलोपाख्यानच्छन्दःसु प्रश्नाः ।

१. (क) अतीव चाश्रुप्रतिपूर्णलोचना समाप्य च स्वस्त्ययनं यथाविधि ।
प्रदक्षिणञ्चापि चकार राघवं पुनः पुनश्चापि निरीक्ष्य सस्वजे ॥
(ख) औरसानपि पुत्रान् हि त्यजन्त्यहितकारिणः ।
समर्थान् प्रतिगृह्णन्ति जनानपि नराधिपाः ॥
(ग) तथा ब्रुवाणामपि धर्मवत्सलां न च स्म सीतां नृवरो निनीषति ।
उवाच चैनां बहु सन्निवर्त्तने वने निवासस्य च दुःखतां प्रति ॥
(घ) यस्त्वया सह स स्वर्गो निरयो यस्त्वया विना ।
इति जानन् परां प्रीतिं गच्छ राम मया सह ॥
(अ) दण्डान्वयमवलम्ब्य 'क ख ग' चिह्नितेषु पद्येषु यथेच्छं द्वयोर्व्याख्यां कुरु । २५

(आ) हिन्दीभाषया 'क' चिह्नितपद्यस्य विशदार्थं लिख । १०

( इ ) रामचन्द्रस्य वनगमने किंकारणमासीदिति संस्कृतभाषया संक्षेपेण लिख ५

२. वक्तृश्रोतृव्यक्तिनिर्देशपूर्वकम् अधस्तनपद्येषु द्वयोर्व्याख्यां कुरु २०
तृतीयस्य च हिन्दीभाषया तात्पर्यं लिख । १२

(क) मात्मानमवमन्यस्व मैनमल्पेन बीभरः ।
मनःकृत्वा सुकल्याणं मा भैस्त्वं प्रतिसंहर ॥

(ख) दासकर्मकरान् भृत्यानाचार्यर्त्विक् पुरोहितान् ।
अवृत्त्यास्मान् प्रजहतो दृष्ट्वा किं जीवितेन ते ॥

(ग) राज्याद्भावो निवृत्तो मे त्रिदिवादिव दुष्कृतः ।
ईदृशं भवती कञ्चिदुपायमनुपश्यति ॥
तन्मे परिणतप्रज्ञे सम्यक् प्रब्रूहि पृच्छते ।
करिष्यामि हि तत् सवं यथावदनुशासनम् ॥

३. विदुला का ? तत्पुत्रस्य किं नाम ? विदुला तं किमर्थमुपदिशति इत्येतत्सर्वं संक्षेपेण वर्णय । ८

४. प्रथमप्रश्ने 'क' चिह्नितपद्ये किं नामच्छन्दः किंवा तस्य लक्षणमिति कथय । ३

५. इन्द्रवज्रा–द्रुतविलम्बित–मालिनी–शिखरिणी–मन्दाक्रान्ताच्छन्दसां मध्ये यथेच्छं त्रयाणां सोदाहरणानि लक्षणानि लिख । १२

६. यति शब्दस्य कोऽर्थः ? मालिनीवृत्ते कुत्र कुत्र यतिः ? यगणतगणयोः किं स्वरूपमेतत्सर्वं वद । ५

## सन् १९५०

### रामवनगमनविदुलोपाख्यानच्छन्दःसु प्रश्नाः ।

१ प्रकरणनिर्देशपूर्वकं 'ख' 'ग' 'घ' 'ङ' चिह्नितपद्येषु त्रयाणां व्याख्यां कुरु । ३०

(क) क एतच्छ्रुद्दधे श्रुत्वा कस्य वा न भवेद् भयम् ।
गुणवान् दयितो राज्ञः काकुत्स्थो यद्विवास्यते ॥

(ख) तथाहि रामं वनवासनिश्चितं ददर्श देवी परमेण चेतसा ।
उवाच रामं शुभलक्षणं वचो बभूव च स्वस्त्ययनाभिकाङ्क्षिणी ॥

(ग) मयार्चिता देवगणाः शिवादयो महर्षयो भूतगणाः सुरोरगाः ।
अभिप्रयातस्य वनं चिराय ते हिताय काङ्क्षन्तु दिशश्च राघव ॥

(घ) न च मे भविता तत्र कश्चित् पथि परिश्रमः ।
पृष्ठतस्तव गच्छन्त्या विहारशयनेष्विव ॥

(ङ) न देवलोकाक्रमणं नामरत्वमहं वृणे ।
ऐश्वर्यं चापि लोकानां कामये न त्वया विना ॥

२. प्रथमप्रश्ने (क) चिह्नितश्लोकस्य हिन्दीभाषया विशदार्थं लिख । ५

३. रामस्य वनगमनमवलम्ब्य स्वसंस्कृतेन पञ्च वाक्यानि लिख। ५
४. वक्तृबोद्धव्यप्रकाशपूर्वकम् अधोलिखितेषु श्लोकेषु त्रयाणां व्याख्यां कुरु। २०

(१) अप्यरेः श्येनवच्छिद्रं पश्येस्त्वं विपरिक्रमन्।
विनदन् वाथवा तूष्णीं व्योम्नि वा परिशङ्कितः॥

(२) आयसं हृदयं कृत्वा मृगयस्व पुनः स्वकम्।
परं विषहते यस्मात् तस्मात् पुरुष उच्यते॥

(३) कृष्णायसस्येव च ते संहृत्य हृदयं कृतम्।
मम मामस्त्वकरुणे वीरप्रज्ञे ह्यमर्षणे।

(४) यदैव शत्रुर्जानीयात् सपत्नं त्यक्तजीवितम्।
तदैवास्मादुद्विजते सर्पाद् वेश्मगतादिव।

५. हिन्दीभाषया चतुर्थप्रश्नान्तर्गतद्वितीयचतुर्थश्लोकयोरेकतरस्य तात्पर्यं लिख ५
६. विदुलोपाख्यानमिदं कस्मिन् ग्रन्थे वर्त्तते? स ग्रन्थः केन कदा लिखित इत्येतत्सर्वं स्वसंस्कृतेन लिख। ५
७. आर्याभुजङ्गप्रयातवंशस्थप्रहर्षिणीस्रग्धराच्छन्दसां मध्ये त्रयाणामेव सोदाहरणानि लक्षणानि लिख। १२
८. कुत्र कुत्र लघोरपि गुरुभावो भवति तत् स्पष्टं लिख। ४
९. शिखरिणीच्छन्दसि कुत्र कुत्र यतिर्भवति तल्लिख। ४

## सन् १९५१

रामवनगमनविदुलोपाख्यानच्छन्दस्सु प्रश्नाः।

१. अदृष्टदुःखो धर्मात्मा सर्वभूतप्रियंवदः।
मयि जातो दशरथात् कथमुञ्छेन वर्त्तयेत्॥ १॥
त्वया विहीनामिह मां शोकाग्निरतुलो महान्।
प्रधक्ष्यति यथाकक्षं चित्रभानुर्हिमात्यये॥ २॥
त्रिविक्रमान् प्रक्रमतो विष्णोरतुलतेजसः।
यदासीन्मङ्गलं राम तत्ते भवतु मङ्गलम्॥ ३॥
अहं गमिष्यामि महावनं प्रिये त्वया हि वस्तव्यमिहैव भामिनि।
यथा व्यलीकं कुरुषे न कस्यचित् तथा त्वया कार्यमिदं वचो मम॥ ४॥
भर्त्तुर्भाग्यं तु नार्येका प्राप्नोति पुरुषर्षभ।
अतश्चैवाहमादिष्टा वने वस्तव्यमित्यपि॥ ५॥

(क) प्रकरणनिर्देशपूर्वकमुपरिनिर्दिष्टेषु पद्येषु त्रयाणां व्याख्या कार्या १८
(ख) 'अदृष्टदुःखः' 'शोकाग्निः' 'महावनम्' इत्येतेषां समासवाक्यानि नामानि च लिख्यन्ताम्। ६

(ग) 'उञ्छ-हिमात्यय-व्यलीक' शब्दानामर्था लिख्यन्ताम् ६
(घ) रामस्य वनगमने किंकारणमिति स्वसंस्कृतेन प्रतिपाद्यताम् । ५
(ङ) हिन्दीभाषया तृतीयश्लोकस्य तात्पर्यमुपवर्ण्यताम् । ५

अलातं तिन्दुकस्येव मुहूर्त्तमपि हि ज्वल ।
मा तुषाग्निरिवानर्चिर्धूमायस्व जिजीविषुः ॥ १ ॥
क्षमावान् निरमर्षश्च नैव स्त्री न पुनः पुमान् ।
सन्तोषो वै श्रियं हन्ति तथानुक्रोश एव च ॥ २ ॥
निर्विण्णात्मा हतमना मुञ्चैतां पापजीविकाम् ।
एकशत्रुवधेनैव शूरो गच्छति विश्रुतिम् ॥ ३ ॥
नैव राज्ञादरः कार्यो जातु कस्याञ्चिदापदि ।
अथ चेदपि दीर्णःस्यान्नैव वर्त्तेत दीर्णवत् ॥ ४० ॥
तस्यास्त्वीदृशकं वाक्यं श्रुत्वापि स्वल्पचेतसः ।
तमस्त्वपागमत्तस्य सुचित्रार्थपदाक्षरम् ॥

२. (क) वक्तृबोद्धव्यप्रदर्शनपुरःसरम् उक्तेषु पद्येषु केषामपि चतुर्णां व्याख्या कार्या २४
(ख) जिजीविषुरिति पदं कथं सिध्यति ? 'अलात' शब्दस्य 'आनुक्रोश' शब्दस्य च कोऽर्थः ? 'हतमना' इत्यत्र कः समासः ? किं च विग्रह-वाक्यम् ? एतत्सर्वमभिधीयताम् । १०
(ग) हिन्दीभाषया द्वितीयश्लोकस्य तात्पर्यं लिख्यताम् । ६

३. (क) इन्द्रवज्रा-द्रुतविलम्बित-वसन्ततिलका-शिखरिणी-मन्दाक्रान्ता-शार्दूलविक्रीडितच्छन्दसां मध्ये केषामपि चतुर्णां सोदाहरणानि लक्षणानि लिख्यन्ताम् । १६
(ख) अक्षरच्छन्दसि कति गणाः ? कानि तेषां नामानि ? मात्राच्छन्दसि च कतिभिर्मात्राभिर्गणो भवति ? एतत्सर्वं विविच्य लिख्यताम् । ४

## सन् १९५२

### रामवनगमनविदुलोपाख्यानच्छन्दस्सु प्रश्नाः ।

१. क एतच्छ्रुत्वा कस्य वा न भवेद्भयम् ।
गुणवान् दयितो राज्ञः काकुत्स्थो यद्विवास्यते ॥ १ ॥
नूनं तु बलवांल्लोके कृतान्तः सर्वमादिशन् ।
लोके रामाभिरामस्त्वं वनं यत्र गमिष्यसि ॥ २ ॥
औषधीश्च सुसिद्धार्थां विशल्यकरीं शुभाम् ।
चकार रक्षां कौशल्या मन्त्रैरभिजजाप च ॥ ३ ॥

व्यजनाभ्यां च मुख्याभ्यां शतपत्रनिभेक्षणम् ।
चन्द्रहंसप्रकाशाभ्यां वीज्यते न तवाऽऽननम् ॥ ४ ॥
सा विद्धा बहुभिर्वाक्यैर्दिग्धैरिव गजाङ्गना ।
चिरसन्नियतं बाष्पं मुमोचाग्निमिवाऽरणिः ॥ ५ ॥
अनन्यभावामनुरक्तचेतसं, त्वया वियुक्तां मरणाय निश्चिताम् ।
नयस्व मां साधु कुरुष्व याचनां, नाऽतो मया ते गुरुता भविष्यति ॥ ६ ॥

(क) उपरि लिखिताः केचन त्रयः श्लोकाः प्रकरणनिर्देशपूर्वकं यथेच्छं व्याख्येयाः । १८

(ख) "शतपत्रनिभेक्षणम्", "अनन्यभावाम्", "गजाङ्गना", इत्येतेषां समासविग्रहवाक्यानि समासनामानि च लिख्यन्ताम् । ६

(ग) "कृतान्त", "विशल्यकरणी", "अरणि" शब्दानामर्थाः लेख्याः ६

(घ) षष्ठश्लोकस्याशयो हिन्दीभाषया साधु विलिख्यताम् । ५

(ङ) रामेण जानक्यै दत्तस्योपदेशस्याशयः स्वसंस्कृतेन संक्षेपतो लिख ५

२. अप्यरेः श्येनवच्छिद्रं पश्येस्त्वं विपरिक्रमन् ।
विवदन् वाऽथवा तूष्णीं व्योम्नोवाऽपरिशङ्कितः ॥ १ ॥
शूरस्योर्जितसत्त्वस्य सिंहविक्रान्तचारिणः ।
दिष्टभावं गतस्यापि विषये मोदते प्रजाः ॥ २ ॥
निर्विण्णात्मा हतमना मुञ्चैतां पापजीविकाम् ।
एकशत्रुवधेनैव शूरो गच्छति विश्रुतिम् ॥ ३ ॥
प्रियाऽभावाच्च पुरुषो नैव प्राप्नोति शोभनम् ।
ध्रुवं चाभावमभ्येति गत्वा गङ्गेव सागरम् ॥ ४ ॥
यदैव शत्रुर्जानीयात् सपत्नं त्यक्तजीवितम् ।
तदैवास्मादुद्विजते सर्पाद्वेश्मगतादिव ॥ ५ ॥
शत्रूनेके प्रपद्यन्ते प्रजहत्यपरे पुनः ।
अन्ये तु प्रजिहीर्षन्ति ये पुरस्ताद्विमानिताः ॥ ६ ॥

(च) वक्तृबोद्धव्य-प्रदर्शनपूर्वकमुपरि निर्दिष्टाः केचन चत्वार एव श्लोका व्याख्येयाः । २४

(छ) "प्रजिहीर्षति" इति पदं कथं सिध्यति ? प्राप्तजीविकाम्, हतमनाः, इत्यत्र कः समासः ? किञ्च विग्रहवाक्यम् ? निर्विण्ण–सपत्नशब्दयोः कोऽर्थः ? एतत्सर्वं सुविचार्य लिख्यताम् । १०

(ज) हिन्दीभाषया तृतीयचतुर्थयोः पद्ययोरेकतरस्याशयः समुपवर्ण्यताम् । ६

३. (ट) वंशस्थ, मालिनी, हरिणी, प्रहर्षिणी, वसन्ततिलका द्रुतविलम्बित-च्छन्दस्सु केषामपि चतुर्णां लक्षणानि सोदाहरणानि लिख्यन्ताम्। १६

(ठ) गणाः के ? तेषां छन्दस्सु किम्प्रयोजनम् ? कथञ्च तेषां प्रयोगः क्रियते ? सुस्पष्टं लिख्यताम् ? ४

---

## तृतीयं पत्रम्

### सन् १९५१

हितोपदेशस्य मित्रलाभे भारतविजनाटके च प्रश्नाः।

१. अधस्तनस्य गद्यभागस्य हिन्दीभाषायामनुवादः कार्यः।

अस्ति भागीरथीतीरे गृध्रकूटनाम्नि पर्वते महान् पर्कटीवृक्षः। तस्य कोटरे दैवदुर्विपाकाद् गलितनखनयनो जरद्गवनामा गृध्रः प्रतिवसति। अथ कृपया तज्जीवनाय तद्वृक्षवासिनः पक्षिणः स्वाहारात् किञ्चिदुद्धृत्य ददति। तेनासौ जीवति शावकरक्षां च करोति।

अथ कदाचिद्दीर्घकर्णनामा मार्जारः पक्षिशावकान् भक्षितुं तत्रागतः। ततस्तमायान्तं दृष्ट्वा पक्षिशावकैर्भयार्तैः कोलाहलः कृतः। तच्छ्रुत्वा जरद्गवेनोक्तम्—'कोऽयमायाति'। दीर्घकर्णो गृध्रमालोक्य सभयमाह—'हा ! हतोऽस्मि'। २०

२. एषु यथेच्छं त्रयाणां व्याख्या संस्कृते कार्या—

(क) षड्दोषाः पुरुषेणेह हातव्या भूतिमिच्छता।
निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता।

(ख) परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम्।
वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम्॥

(ग) मनस्यन्यद्वचस्यन्यत् कार्यमन्यद्दुरात्मनाम्।
मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम्॥

(घ) उत्तमस्यापि वर्णस्य नीचोऽपि गृहमागतः।
पूजनीयो यथायोग्यं सर्वदेवमयोऽतिथिः॥

(ङ) सर्वाः सम्पत्तयस्तस्य, सन्तुष्टं यस्य मानसम्।
उपानद्गूढपादस्य, ननु चर्मावृतैव भूः॥

---

३. एषु यथेच्छं द्वयोरेव व्याख्या कार्या—

(क) हा हा मयैव विहितः प्रथमापराधो, यत्प्रत्ययादिह सुखेन निवासितोऽसौ ।
तस्यैतदेव फलमस्त्यशुभं प्रपन्नाः, यन्मे निरीहतनयाः प्रलयं प्रयान्ति ॥

(ख) नचास्य राज्ये क्वचिदस्ति तस्करो, न वा मृषा कोऽपि च भाषते क्वचित् ।
न सेवते कोऽपि दुरोदरं जनः, स कोविदैः साधुजनैश्च संगतः ॥

(ग) किं सर्वानपि चूर्णये परिवृतान् पुरुषदेशोद्भवान्,
किं वा वङ्गविभेदकं खरजनं लोकान्तरं प्रापये ।
किं वा गुप्तचरान् विकर्मनिरतान् स्वीयानपि त्रासये,
किं कर्तव्यविमूढतामुपगतो न ज्ञातुमस्मि क्षमः । २५

४. अस्मिन्श्लोके निर्दिष्टा कथा स्वसंस्कृतेन लेख्या — २०

अज्ञातकुलसीलस्य वासो देयो न कस्यचित् ।
मार्जारस्य हि दोषेण हतो गृध्रो जरद्गवः ॥

अथवा

कर्तव्यः संचयो नित्यं कर्तव्यो नातिसंचयः ।
पश्य संचयशीलोऽसौ धनुषा जम्बुको हतः ॥

## सन् १९५२

हितोपदेशस्य मित्रलाभे, भारतविजयनाटके च प्रश्नाः ।

१. अधस्तनस्य गद्यखण्डस्य हिन्दीभाषायामनुवादो विधेयः—

अस्ति चम्पकाभिधानायां नगर्यां परिव्राजकावसथः । तत्र चूडाकर्णो नाम परिव्राट् प्रतिवसतिस्म । स च भोजनावशिष्टभिक्षान्नसहितं भिक्षापात्रं नागदन्तकेऽवस्थाप्य स्वपिति । अहञ्च तदन्नमुत्प्लुत्य प्रत्यहं भक्षयामि । अनन्तरं तस्य प्रियसुहृद्वीणाकर्णो नाम परिव्राजकः समायातः । तेन सह कथाप्रसङ्गावस्थितो मम त्रासार्थं जर्जरवंशखण्डेन चूडाकर्णो भूमिमताडयत् ।

वीणाकर्ण उवाच—सखे ! किमिति मम कथाविरक्तोऽन्याशक्तो भवान् । चूडाकर्णेनोक्तम्—मित्र ! नाहं विरक्तः । ३०

२. निम्नाङ्कितयोः द्वयोरेकस्यैव हिन्दीभाषायामर्थो लेख्यः—

(क) व्योमैकान्तविहारिणोऽपि विहगाः सम्प्राप्नुवन्त्यापदम् ।
बध्यन्ते निपुणैरगाधसलिलान्मत्स्याः समुद्रादपि ॥
दुर्नीतं किमिहास्ति किं सुचरितं कः स्थानलाभे गुणः ।
कालो हि व्यसनप्रसारितकरो गृह्णाति दूरादपि ॥

(ख) अर्थाः पादरजोपमा गिरिनदीवेगोपमं यौवनम् ।
आयुष्यं जललोलबिन्दुचपलं फेनोपमं जीवितम् ॥

धर्मं यो न करोति निन्दितमतिः स्वर्गार्गलोद्घाटनम् ।
पश्चात्तापयुतो जरापरिगतः शोकाग्निना दह्यते ॥

३. एषु द्वयोरेव कयोश्चित् व्याख्या संस्कृते कार्या—

(क) अवशेन्द्रियचित्तानां हस्तिस्नानमिव क्रिया ।
दुर्भगाभरणप्रायो ज्ञानं भारः क्रियां विना ॥

(ख) सर्वहिंसानिवृत्ता ये नराः सर्वसहाश्च ये ।
सर्वस्याश्रयभूताश्च ते नराः स्वर्गगामिनः ॥

(ग) शुचित्वं त्यागिता शौर्यं सामान्यं सुखदुःखयोः ।
दाक्षिण्यं चानुरक्तिश्च सत्यता च सुहृद्गुणाः ॥

(घ) को धर्मो भूतदया किं सौख्यमरोगिता जगति जन्तोः
कः स्नेहः सद्भावः किं पाण्डित्यं परिच्छेदः ॥

(ङ) कायः सन्निहितापायः सम्पदः पदमापदाम् ।
समागमाः सापगमाः सर्वमुत्पादि भङ्गुरम् ॥

४. निम्नलिखितश्लोकेषु केषाञ्चिदेव त्रयाणां व्याख्यानं संस्कृतभाषायां कार्यम्—

(क) धर्मादर्थं न वा कामं बाधयेत विचक्षणः ।
धर्मकामौ न चार्थेन कामाद्वौ नेति निर्णयः ॥

(ख) सति युद्धे प्राणिहिंसा शान्तिभङ्गः प्रजाक्षयः ।
आयनाशो महत्कष्टं नास्माद् युद्धं समर्थये ॥

(ग) सर्वापहारे ग्रहिलान् अत्याचारपरान् परान् ।
विलोक्य सर्वलोकस्य चेतो मुञ्चति मार्दवम् ॥

(घ) धर्मराज्यापहर्तारो विदेशप्रभवा इमे ।
निष्काशनीयाः सम्भूयास्माभिर्युद्धाय सज्यताम् ॥

(ङ) सर्वे भवन्तो योद्धारो देशरक्षादृढव्रताः ।
वङ्गभङ्गविभेदार्थं यतन्ताम् बुद्धिपूर्वकम् ॥

५. अधोऽङ्कितगद्यस्य प्रसङ्गनिर्देशपूर्वकं हिन्दीभाषायामर्थो लेख्यः ।

ततः जले निमग्नानां फ्रांसदेशीयानाम् पोतविध्वंसकानाम् रहस्यमुत्कोचं गृहीत्वा फ्रान्सदेशोद्भवेन टेरानमहोदयेन समुद्घाटितम् । अतो विजितं क्लाइवमहोदयेन चन्द्रनगरे तद्दुर्गम् । पराजिताश्च सर्वेऽपि तत्रस्थाः फान्स-देशीयाः—परं स्वपितृमित्रबान्धवैरन्यैश्च फान्सदेशीयैर्धिक्कारितः परमां ग्लानिमापन्नः पश्चात्तापसमुज्ज्वलितान्तःकरणस्टेरानमहोदयः आत्मघातेन पापमशोधयत् ।

# चतुर्थं पत्रम्

## सन् १९५१

### अनुवादे कोषे च प्रश्नाः

१. निम्ननिर्दिष्टवाक्येषु केषाञ्चित्पञ्चानां हिन्दीभाषयानुवादः कार्यः— ३०

(क) राज्ञोक्तम्—नेदानीमवसरोऽस्माकम्, प्रभाते द्रक्ष्यामः। ततः प्रभाते कश्चिन्महाकायः विपुलकन्धरः पुरुषः आत्मनः स्त्रिया युक्तः समागत्य सभायां राजानं प्रणतवान् उवाच च।

(ख) पुरा किल हरेर्लब्धवरो गरुडः नागभक्ष्यः यं कञ्चन पन्नगं पश्यति तं भक्षयति।

(ग) सखे इतोऽपीयं रमणीया उल्लसति वृक्षपंक्तिः। एतानि प्रसूनानि प्रस्फुटितानि सन्ति। गुञ्जन्ति चैते मधुलोलुपा मधुकराः।

(घ) एवं स निश्चित्य सुलोचनया प्रियया सह मृगयादर्शनकौतुकेन रथमारुह्य पुरान्निश्चक्राम।

(ङ) अथ गच्छत्सु दिवसेषु कदाचित्केनापि चौरेण भूरिसुवर्णादिकं चोरितम्। ततो यदा चौरो नाज्ञायत तदा स राजा विश्रुतं हरिशर्माणमानयामास।

(च) राजा च तदर्थं ज्ञात्वा शय्यातो भूमौ निपपात। अनेकविधोपायैः ससंज्ञो भूत्वा स पुनरप्युवाच।

(छ) अथ सा पुत्रवत्सला तपस्विनी दारुणमपि शोकं विवेकबलेन रुन्धती प्राकृतो जन इव मुक्तकण्ठं न विललाप।

२. अधोनिर्दिष्टहिन्दीवाक्येषु पञ्चानामेव संस्कृतभाषयानुवादः कार्यः— ५०

(अ) हम लोग सर्वशक्तिमान् ईश्वर को प्रणाम करते हैं।

(आ) आज प्रातःकाल हम दोनों फल फूल के लिये उस बाग में गये।

(इ) वीर लोग अपने पराक्रम से संग्राम में शोभित होते हैं।

(ई) श्री रामचन्द्र जी का गुणों के कारण सब जगह आदर किया गया।

(उ) श्रीकृष्ण जी सत्यभामा को प्रसन्न करने के लिये स्वर्ग से कल्पवृक्ष ले आये।

(ऊ) वे लड़के पाठशाला में कब जाते हैं और कब घर वापस आते हैं?

(ए) आज भी गङ्गा जी के किनारे बहुत से ऋषि तपस्या कर रहे हैं।

---

(ऐ) क्या इस देश में संस्कृत राष्ट्रभाषा हो सकती है ?

३. वायुशब्दस्य पर्यायवाचिनः शब्दा लेख्याः । १०

४. अधोऽङ्कितशब्देषु पञ्चानां हिन्दीभाषायामर्था लेख्या :— १०

सरित्पति, निशापति, शेमुषी, किंवदन्ती, अनल, अनवधानता, ऊर्मि, कर्णधार, अरविन्द ।

## सन् १९५२

## अनुवादनिबन्धयोः प्रश्नाः

१. निम्नलिखितवाक्येषु केषाञ्चित्पञ्चानां हिन्दीभाषयानुवादः कार्यः—

(क) स महात्मा दलितान् जनान् हरेः प्रियानवबुध्य तान् हरिजनानभ्यधात् तेषामुद्धाराय च महान्तमुद्योगमकार्षीत् ।

(ख) ततो देवव्रतो वृद्धामात्यसकाशात्सर्वं वृत्तान्तं ज्ञात्वा कतिपयैः वृद्धैः क्षत्रियैः सह दाशराजमुपगम्य पित्रे तां कन्यामयाचत ।

(ग) अध्यापको महात्मनां चरितोपदेशेन सदुदाहरणोपस्थापनेन च दुश्चरित्रानपि बालकान् सद्वृत्तान् विदधाति ।

(घ) अत्र हिमवद्देशे अनेके विरक्ता कुटीरं रचयित्वा तपश्चर्यामाचरन्तः निर्धूतत्रिविधतापाः मोक्षाय कल्पन्ते ।

(ङ) युष्मासु बहुभिर्वाराणसीवैभवमाकर्णितम् कतिपयैश्च दृग्गोचरीकृतमपि स्यात् । अत्र कृतनिवासाः मानवाः सतां सङ्गेन उपदेशेन च निर्धूतकल्मषा भवन्ति ।

(च) मानवा अपि खगा इव वियति विहर्तुकामा भृशमयतन्त । अधुना विज्ञानप्रभावात् नानाविधानि वायुयानानि प्रादुर्भूतानि ।

(छ) अज्ञातवासं विधाय ते पाण्डवाः श्रीकृष्णसाहाय्यमवाप्य महाभारते विजयिनोऽभवन् । ३०

२. अधोनिर्दिष्टवाक्येषु पञ्चानां संस्कृतभाषयानुवादः कार्यः ।

(अ) हम लोगों के राष्ट्रपति बड़े उदार हैं ।

(आ) प्रत्येक प्राणी को विश्व में शान्ति-स्थापना के लिये प्रयत्न करना चाहिये ।

(इ) आज संस्कृत पढ़ने वाले छात्र हर एक पद के अधिकारी हैं ।

(उ) लक्ष्मी दरिद्र के पास क्यों नहीं जाती ?

(ऋ) भीष्मपितामह भारत के आदर्श पुरुष थे ।

(लृ) यह गोदावरी नदी फूले हुये वृक्षों से घिरी है ।

(ए) स्वभावकृपण के चरित्र से तुम्हें क्या शिक्षा मिलती है ?

(ऐ) देवव्रत पिता और माता के भक्त थे । ५०

